॥ अर्हम् ॥

श्रीयशोविजयजैनग्रन्थमाला [ ४ ]



श्रीमुनिसुन्दरसूरिविरचिता



# गुर्वावली




द्वितीयावृत्तिः ।

वीर संवत् २४३७ ।

PRINTED AND PUBLISHED BY SHAH HARKHCHAND BHURABHAI
AT THE DHARMABHYUDAYA PRESS,
Benares City.

मूल्यं ०–४–० ।

अर्हम्

श्रीयशोविजयजैनग्रन्थमाला [ ४ ]



श्रीमुनिसुन्दरसूरिविरचिता

# गुर्वावली ।

रंगूनस्थश्रीश्वेताम्बरजैनसङ्घसाहाय्येन

वाराणस्यां

श्रेष्ठिभूराभाईतनुजहर्षचन्द्रेण निजधर्माभ्युदययन्त्रालये
मुद्रिता प्रकाशिता च ।

द्वितीयावृत्तिः ।

वीरसंवत् २४३७ ।

मूल्यं ०–४–० ।

# प्रस्तावना ।

अस्त्ययं लघीयानपि वरीयान् गुर्वावलीनामा ग्रन्थः **पर्युषणापर्ववि-ज्ञप्तित्रिदशतरङ्गिणी**नाम्नो महाग्रन्थस्य गुरुवर्णनप्रवाहरूप एकस्तृतीयो विभाग¹ः । विनिर्मातारश्चास्य समस्तशास्त्रपारावारपारदृश्वानः कविचक्रचक्रवर्तिनः श्वेताम्बरजैनाचार्यास्त एव **श्रीमन्मुनिसुन्दरसूरयः,** ये परमावधिमधिगतेन निजेन प्रतिभाप्रकर्षेण, सहस्रस्यावधानानां विधायिन्या च लोकोत्तरशक्त्या विश्वस्मिन्नपि विश्वे परां प्रसिद्धिमासादितवन्तः, ये च तदानीन्तनैस्तच्चातुर्वैद्यवैशारद्यचमत्कृतचित्तैस्तत्तद्देशीयविबुधवृन्दैः **कालीसरस्वती-वादिगोकुलषण्ढ**प्रभृतिभिरप्रतिमविरुदैरनल्पं संमानास्पदमकारिषत, ये पुनस्तैस्तैः स्वीयैरनन्यसाधारणैर्गुणगणैर्जिनशासनं महीयांसं प्रभावमापीपदन् । तथा च तन्निर्मलगुणप्रतिपादकानां तत्तद्ग्रन्थानामुल्लेखाः, विज्ञाय तदुपयोगितां, अत्रोद्ध्रियन्ते—

श्रीजिनहर्षगणिकृते विंशतिस्थानकविचारामृतसंग्रहे²—

" तच्छिष्यः प्रथमः समर्थमहिमा त्रैविद्यगोष्ठीगुरुः
सूरिः श्रीमुनिसुन्दरः सुरगुरुः ख्यातः क्षितौ प्रज्ञया " ।

---

१ यदाहुः सूरय एवैतद्ग्रन्थप्रान्ते—

" इति श्रीयुगप्रधानावतार—श्रीमत्तपागच्छाधिराजबृहद्गच्छनायकपूज्याराध्यपरमाप्तपरमगुरुश्रीदेवसुन्दरसूरिगणराशिमहिमार्णवानुगामिन्यां तद्विनेयश्रीमुनिसुन्दरगणिहृदयहिमवदवतीर्णश्रीगुरुप्रभावपद्मह्रदप्रभवायां श्रीमहापर्वाधिराजश्रीपर्युषणापर्वविज्ञप्तित्रिदशतरङ्गिण्यां तृतीये श्रीगुरुवर्णनस्रोतसि गुर्वावलीनाम्नि " इति ।

२ एतद्ग्रन्थविरचनाकालस्तत्कर्तृभिस्तत्रैवं निरदेशि—

" वीरमगामाख्यपुरे युग्म-व्योमे-न्दु-पञ्चभिः ।
प्रमिते वत्सरे हर्षाज्जिनहर्षेण साधुना " ॥ १५ ॥

श्रीहेमहंसगणिविरचितायां न्यायार्थमञ्जूषायाम्–

" मारिर्येन निवारिता सुरकृता संसूत्र्य शान्तिस्तवं
स श्रीमान् मुनिसुन्दराभिधगुरुर्दीक्षागुरुर्मेऽभवत् " ।

श्रीरत्नशेखरसूरिप्रणीते आचारप्रदीपे–

" मारीत्यवमनिराकृति-सहस्रनामस्मृतिप्रभृतिकृत्यैः ।
श्रीमुनिसुन्दरगुरवश्चिरन्तनाचार्यमहिमभृतः " ॥ ८ ॥

श्रीप्रतिष्ठासोमगणिविनिर्मिते सोमसौभाग्यकाव्ये षष्ठे सर्गे–

" व्यजिज्ञपद् विज्ञशिरोमणिश्च गच्छाधिपं स्वच्छमतिप्रसारम् ।
श्रीसूरिदीव्यत्पदभूमिवित्तव्ययस्य निर्मापणतः प्रसीद ॥
ततो गुरुः सौवविनेयवृन्दे ददौ सदौचित्यगुरुः स्वदृष्टिम् ।
श्रीवाचकेन्द्रे मुनिसुन्दराह्वे विशेषतो योग्यतया तया च ॥
जल्पत्यनल्पं सविकल्पजालं सदाप्यनुस्यूतमतिप्रभूतम् ।
स्वाक् संस्कृतं प्रोन्मदवादिवृन्दं ननाश यस्मिन् किल काकनाशम् ॥
स्वसाध्यसिद्ध्यै सति यत्र हेतूपन्यासमातन्वति वादभूमौ ।
प्रावादुकोन्मादभरः शरीरे स्वेदेन सार्धं किल जागलीति ॥
यन्निर्मिता श्रीगुरुभव्यकाव्यविज्ञप्तिगङ्गा गुणसत्तरङ्गा ।
प्रक्षालयन्ती कलिकश्मलौघं हृष्टानकार्षीत सुमनःसमूहान् ॥

---

१ श्रीयशोविजयग्रन्थमालाया मुद्रितोऽयं ग्रन्थः । एतन्निर्माणसमयस्तु–

"श्रीमद्विक्रमवत्सरे तिथितिथौ शुक्लद्वितीयातिथौ
पूर्वाह्णे मृगलाञ्छने मृगशिर श्रृङ्गाग्रश्रृङ्गारिणि ।
शुक्रस्याहनि शुक्रमासि, नगरे श्रीसागरेऽहम्मदा-
वादे निर्मितपूर्तिरेष जयताद् ग्रन्थः सुधीवल्लभः " ॥ १४ ॥

इति तत्प्रशस्तिश्लोकेन स्फुटं विनिर्णीयते ।

२ अयं ग्रन्थः कर्तृभिः षोडशाधिकपञ्चदशशतमिते वर्षे व्यधायि, यदाहुस्तत्रैव ते–

" एषा श्रीसुगुरूणां प्रसादतः षट्-कु-तिथिमिते वर्षे ।
जग्रन्थ ग्रन्थमिमं सुगमं श्रीरत्नशेखरः सूरिः " ॥ १२ ॥

३ एतद्ग्रन्थविरचितिसमयं तत्कर्तारः प्रान्त एवं विनिवेदयन्ति–

" पारावार-कर-स्मरेषु-(१५२४)मितवर्षेऽतिहर्षाद् व्यधाद्
विज्ञाना हृदयङ्गमं च सुगमं क्लृप्तेन्दिरासंगमम् " ।

येन प्रक्लृप्ताः स्तुतयः स्तवाश्च गाम्भीर्यभृन्नव्यसदर्थसार्थाः ।
श्रीसिद्धसेनादिमहाकवीनां कृतीर्मतीद्धा अनुचक्रिरे ताः ॥
सद्युक्तिभृत्संस्कृतजल्पशक्तिः सहस्रनाम्नां कथनैकशक्तिः ।
तात्कालिकी नव्यकवित्वशक्तिर्न यं विनाऽन्यत्र समीक्ष्यतेऽद्य ॥
विद्या न साऽऽस्ते निरवद्यताभृत् कला न सा चाऽस्ति वरा धरायाम् ।
यस्यां न यस्याऽङ्गिगणार्चितस्य बुद्धिर्विशुद्धा प्रसरीसरीति ॥
मेधाविनः सन्ति परःसहस्रा अदूष्यवैदुष्यधरा धरायाम् ।
परं न यस्य प्रसरत्प्रकर्षप्रज्ञस्य विज्ञस्य तुलाभृतः स्युः ॥
तं वाचकं सूरिपदार्हमर्हन्मतोन्नतिस्फातिकरं विमृश्य ।
वचोऽनुमेने सुमना महेभ्यराट्श्रीदेवराजस्य गणाधिराजः ॥
अगादसौ धाम निकाममन्तश्चित्ते प्रहृष्टः कृतिनां गरिष्ठः ।
स्राक् प्राहिणोत् कुङ्कुमपत्रिकाश्च कीर्त्या समं भूमितलेऽखिलेऽपि ॥
समागमन् सङ्घजनाश्च तेनाऽऽहूताः प्रभूताः परिपूतचित्ताः ।
तदा च रूपास्तसुपर्वगर्वैर्मैस्तत्पुरं स्वःपुरवद् विरेजे ॥
भेर्याद्यवाद्यानि जगर्जुरूर्जस्वलानि मङ्गल्यरवाऽतुलानि ।
समं च तैः स्राक् सुकृतानि तानि पुराकृतानि प्रथितानि तस्य ॥
वातोर्मिवेल्लच्छुचिकेतनानि निकेतनानि व्यवहारिनेतुः ।
बभासिरे तस्य गुणान्वितस्य श्रद्धोज्ज्वलानीव लसन्मनांसि ॥
तदा च सुत्रामपुरस्य शोभां शुभां बिभर्ति स्म पुरं तदुच्चैः ।
पदे पदे यत्प्रमदप्रदात्री निरीक्ष्यतेऽखर्वसुपर्वराजिः ॥
सर्वाङ्गचार्वाभरणाभिरामा रामाः सकामाः प्रददुस्तदानीम् ।
न केवलं सद्धवलानि सर्वश्रोतृश्रुतीनामपि च प्रमोदम् ॥
महोत्सवेषु प्रथितेषु तेषु समन्ततः संततमद्भुतेषु ।
सोत्कर्षहर्षेण पुरात् पुराणः शोकस्तदानीं निरकासि सद्यः ॥
मुहूर्तघस्रेऽथ रमासनाथयुगादिनाथस्य पृथूच्चचैत्ये ।
अमण्डि नन्दिर्गुरुभिस्तदानीमुर्व्यां च गुर्व्यां स्वयशःसमृद्धिः ॥
महामहौघे प्रसरत्यनल्पे मङ्गल्यजल्पेऽखिलबन्दिनां च ।
श्रीवाचकानां वरसूरिमन्त्रं प्रादाद् मुदा श्रीतपगच्छनाथः ॥
सङ्घाधिपश्रीयुतदेवराजः सदावदातैरवदातकीर्तिः ।
उत्कर्षतो दानजलं प्रवर्षन् प्रावृड्घनाभो ददृशे तदानीम् ॥
माणिक्यरत्नैः प्रवरैश्च चीरैर्विभूषणैर्व्यक्तकृतदूषणैश्च ।
प्रचक्रिरे तेन नरेन्द्रकल्पाः कल्पाङ्घ्रिपाभेन वनीपकौघाः ॥
मुक्ताफलैर्निर्मलकान्तिकान्ताचिरत्नरत्नैर्विशदाक्षतैश्च ।

वर्धापयामासुरसीमरूपाः स्त्रियः श्रियः सद्ध्रुतिभिर्गुरूंस्तान् ॥
गर्जत्यूर्जितवर्यतूर्यनिकरे दिक्चक्रकुक्षिंभरि-
ध्वाने सद्धवलध्वनौ च नितरां प्रोत्सर्पति स्त्रीमुखात् ।
हूहूतुम्बुरुजैत्रगायनगणैर्विस्तार्यमाणे च स-
ङ्गीते श्रीगुरवो विनेयसहिताः श्रीधर्मशालां ययुः ॥
प्राज्यत्पेशलखण्डिकामृदुलसन्नर्मप्रतिष्ठानिका-
श्रीखण्डोज्ज्वलपट्टमुख्यसिचयैश्चञ्चत्प्रभासञ्चयैः ।
रम्यश्रीयुतसोमसुन्दरमहासूरीश्वराणां व्यधात्
पूजां श्रीश्रितदेवराजमहिमा श्रीदेवराजस्तदा ॥
पक्वान्नैर्विविधैः स धीरमुकुटः सद्गन्धकूरोत्करै-
र्दोलिस्फातिततैः ससारभघृतैर्घोलामृतैश्चामितैः ।
श्रीसङ्घं सकलं कलङ्करहितश्रीर्जेमयामास न-
त्पूजां चीरचयैर्व्यधाच्च गणनातीतैः प्रतीतैर्गुणैः ॥
श्रीमान् सूरिपदे पदेऽथ यशसां कारापिते श्रीगुरो-
रादेशाद् मुनिसुन्दरव्रतिवरश्रीसूरिणा संयुतः ।
युक्तः पञ्चशतीमितैश्च शकटैरुद्यद्भटैर्भूयसा
सङ्घेनाप्यनघेन तूर्णमचलत् श्रीतीर्थयात्रां प्रति ॥
भेर्याद्यूर्जितहृद्यवाद्यनिनदैर्व्योमाङ्गणं गर्जयन्
रङ्गत्तुङ्गतुरङ्गमक्रमखुराघातैः क्षितिं कम्पयन् ।
चञ्चद्वर्णसुवर्णदण्डकलशैर्देवालयैरुन्नतैः
शोभां बिभ्रदद्भ्रशुभ्रयशसा शुक्लं सृजन् क्ष्मातलम् ।
श्रीशत्रुञ्जयपर्वतेऽपि च गिरौ श्रीरैवते दैवतं
श्रीनाभेयजिनं निरस्तवृजिनं नेमीश्वरं भास्वरम् ।
नत्वा तत्र महोत्सवान् नवनवान् कृत्वा च दत्त्वा धनं
भूत्वा संघपतिः कृती निजगृहं चागात् स सङ्घोऽनघ. ॥
श्रीगच्छेन्द्रगिरा सुधारसकिरा शिष्योत्करैः संयुता-
गर्वाखर्वकुवादिसिन्धुरघटावित्रासपञ्चाननाः ।
पूर्णेन्दुप्रतिमाननाः धनजनाह्लादप्रकर्षप्रदाः
श्रीमन्तो मुनिसुन्दराह्वगुरवः क्षोणौ विहारं व्यधुः ॥

दशमे सर्गे च—

श्रीसोमसुन्दरयुगोत्तमसूरिपट्टे श्रीमान् रराज मुनिसुन्दरसूरिराजः ।
श्रीसूरिमन्त्रवरसंस्मरणैकशक्तिर्यस्याभवद् भुवनविस्मयदानदक्षा ॥
श्रीरोहिणीति विदिते नगरे ततेतिपश्चात्कृतेः किल चमत्कृतहृत् पुरेशः ।

ऊरीचकार मृगयाकरणे निषेधं प्रावर्तयन्निखिलनीवृति चाप्यमारिम् ॥
प्रागेव देवकुलपाटकपत्तने यो मारेरुपद्रवदलं दकयाञ्चकार ।
श्रीशान्तिकृत्स्तवनतोऽवनतोत्तमाङ्गभूपालमौलिमणिघृष्टपदारविन्दः ॥
श्रीमानदेवशुचिमानसमानतुङ्गमुख्यान् प्रभावकगुरून् स्मृतिमानयद् यः ।
श्रीशासनाभ्युदयदप्रथितावदातैस्तैस्तैश्चमत्कृतिकरैः कुमुदावदातैः" ॥

श्रीसोमचारित्रगणिगुम्फिते गुरुगुणरत्नाकरकाव्ये—

"अथ श्रीमुनिसुन्दरसूरीश्वराणां सर्वगुणसंपूर्णानामपि
कियद्गुणवर्णनम्—

अध्यात्मकल्पद्रुमवल्गुगुर्वावलीविचित्रात्मपतिस्तवादीन् ।
ग्रन्थान् बहून् प्रेथुरजिह्ममत्या येऽपास्तवाचस्पतिदर्पदीप्त्या ॥ ६७ ॥
श्रीसूरिमन्त्रस्मरणातिशेषान् पष्ठाष्टमादेश्च तपोविशेषान् ।
प्रत्यक्षतामाययुरार्यपद्मावत्यादिदेव्यः प्रमदेन येषाम् ॥ ६८ ॥
निर्माय यैः शान्तिकरं स्तवं नवं निवारिता मारिरिहाऽतिदुस्तरा ।
ध्यानात् तथा तिड्डभरेतिरञ्जसा जाग्रद्गुणैर्जैनमतप्रभावकैः ॥ ६९ ॥

पीयूषयूषमधुरात्मगिरा दुरन्त-
मानेमुषामिह विमोहविषं हरन्तः ।
भव्योत्सवं भुवि विहारविधिं सृजन्तः
श्रीमानतुङ्गगुरुवद् महिमर्धिमन्तः ॥ ७० ॥

सत्क्षुल्लाभमनिभश्रुतसंविदेका-
ऽऽलोकात् समीक्ष्य मुनिसुन्दरसूरिराजाः ।
स्वाश्रय्युमापुरसुमापुरनामधेयं
ग्रामं क्रमादनुपमं तमुपागमन्त ॥ ७१ ॥

श्रीदेवविमलगणिभिर्गुम्फिते हीरसौभाग्यमहाकाव्ये चतुर्थे सर्गे—

"पट्टश्रियाऽस्य मुनिसुन्दरसूरिशक्रे
संप्राप्तया कुवलयप्रतिबोधदक्षे ।
कान्तेव पद्मसुहृदः शरदिन्दुबिम्बे
प्रीतिः परा व्यरचि लोचनयोर्जनानाम् ॥ १२४ ॥

---

१ श्रीयशोविजयजैनग्रन्थमालायां मुद्रितम् । इदंनिर्माणसमयस्तु—
"आक्षेपाद् विधु-वेद-वर्ष्म वसुधावर्षे सुभिक्षोद्भवे"
इति ग्रन्थान्तभागे कर्तृभिरेव स्पष्टं निशङ्कितः ।

योगिनीजनितमार्युपप्लवं येन शान्तिकरसंस्तवादिह ।
वर्षणादिव तपर्तुतसयो नीरवाहनिवहेन जघ्निरे ॥ १२५ ॥
बाल्येऽपि रश्मीन् सरसीजबन्धुरिवाऽत्रधानानि वहन् सहस्रम् ।
अष्टोत्तरं वर्तुलिकानिनादशतं स्म वेवेक्ति धियां निधिर्यः ॥ १२६ ॥
अलम्भि याम्यां दिशि येन कालीसरस्वतीदं विरुदं बुधेभ्यः ।
रवेरुदीच्यामिव तत्र तेजोऽतिरिच्यते यत्पुनरत्र चित्रम्'' ॥ १२७ ॥

श्रीधर्मसागरोपाध्यायग्रथितायां तपागच्छपट्टावल्यां च–

''येनानेकप्रासादपद्मचक्रषट्कारकक्रियागुप्तकार्धभ्रमसर्वतोभद्रमुरजसिंहासनाशोकभेरीसमवसरणसरोवराऽष्टमहाप्रातिहार्यादिमय्यत्रिशतीबन्धतर्कप्रयोगाद्यनेकचित्राक्षरद्व्यक्षरपञ्चवर्गपरिहाराद्यनेकस्तवमयत्रिदशतरङ्गिणीविज्ञप्तिनामधेयाष्टोत्तरशतहस्तमितो लेखः श्रीगुरूणां प्रेषितः । चातुर्वैद्यवैशारद्यनिधिरुपदेशरत्नाकरप्रमुखग्रन्थकारकः । स्तम्भतीर्थे दफरखानेन **वादिगोकुलषण्ढ** इति भणितः। दक्षिणस्यां **कालीसरस्वती** इति प्राप्तविरुदः। अष्टवर्षगणनायकत्वानन्तरं वर्षत्रिकं युगप्रधानपदव्युदर्याति जनैरुक्तः । अष्टोत्तरशतवर्तुलिकानादोपलक्षकः । बाल्येऽपि सहस्राभिधानधारकः । सन्तिकरमिति समहिमस्तवनकरणेन योगिनीकृतमार्युपद्रवनिवारकः । चतुर्विंशतिवारं विधिना सूरिमन्त्राराधकः । तेष्वपि चतुर्दशवारं यदुपदेशतः स्वस्वदेशेषु चम्पकराजदेवाधारादिराजभिरमारिः प्रवर्तिता । सीरोहीदिशि सहस्रमल्लराजेनाप्यमारिपरिवर्तने कृते सति येन तिड्डकोपद्रवो निवारितः'' ।

उक्तसूरीणां जन्म-दीक्षादिसमयोऽपि श्रीमद्धर्मसागरोपाध्यायैर्निजे तपागच्छपट्टावलीग्रन्थ एवमुदटङ्कि–

''श्रीमुनिसुन्दरसूरेर्वि० षट्त्रिंशदधिके चतुर्दशशत (१४३६) वर्षे जन्म । त्रिचत्वारिंशदधिके (१४४३) व्रतम् । षट्षष्ट्यधिके (१४६६) वाचकपदम् । अष्टसप्तत्यधिके (१४७८) द्वात्रिंशत्सहस्र (३२०००) टङ्कव्ययेन वृद्धनगरीयसं० देवराजेन सूरिपदं कारितम् । त्र्युत्तरपञ्चदशशत (१५०३) वर्षे का० शु० प्रतिपद्दिने स्वर्गभाक्'' ।

एतेनैतेषां सूरिवर्याणां सत्तासमयो विक्रमात् पञ्चदशशताब्दीरूप इति स्पष्टं विनिश्चीयते । संवदन्ति चैतत् स्वयं सूरयोऽपि तत्र तत्र स्वीयग्रन्थविरचनाकालमुपनिबध्नन्तः- तथाहि– अत्रैव (गुर्वावल्याम्)–

''रस-रस-मनुमितवर्षे मुनिसुन्दरसूरिणा कृता पूर्वम् ।

मध्यस्थैरवधार्या गुर्वालीयं जयश्रीद्वा ॥ ४१३ ॥

मित्रचतुष्ककथायामपि च–

"वेदाष्टमनुमितेऽब्दे मुनिसुन्दरसूरिभिः सुमुखवृत्तम् ।
भव्यानुग्रहहेतोः श्रेयःप्राप्त्यै व्यधायीयम्" ॥ १ ॥

एभिः पूज्यपादैरन्येऽपि विद्वत्तापरिपूर्णा बहवो ग्रन्था जग्रन्थिरे, तत्रैतावन्तस्त्विदानीमप्युपलभ्यन्ते–

| | |
|---|---|
| १ त्रैविद्यगोष्ठी । | २ अध्यात्मकल्पद्रुमः । |
| ३ उपदेशरत्नाकरः सटीकः । | ४ जयानन्दचरित्रम् । |
| ५ मित्रचतुष्ककथा । | ६ चतुर्विंशतिजिनस्तोत्रम् । |
| ७ जिनस्तोत्ररत्नकोषः । | ८ शान्तिकरस्तोत्रम् । |

इयं च द्वितीयावृत्तिः प्रथमावृत्तेः, **शास्त्रविशारदजैनाचार्यश्री-विजयधर्मसूरीश्वराणा**मेकस्याः प्राचीनाया अतिशुद्धाया हस्तलिखित-प्रतेश्चावलम्बनेन सम्यक् संशोध्य मुद्रिता, तथापि 'मनुष्यसहभूर्भ्रान्तिर्दुर्निवारा' इति या काचित् स्खलनाऽत्र संजाता भवेत् तां कृपां विधाय धीधनाः परिशोधयन्तु–

इति प्रार्थयन्ते–

**यशोविजयजैनग्रन्थमालाव्यवस्थापकाः ।**



अर्हम्

श्रीविजयधर्मगुरुभ्यो नमः ।

श्रीमुनिसुन्दरसूरिविरचिता

# गुर्वावली ।

जयश्रियं रातु जिनेन्द्रचन्द्रमाः स वर्द्धमानप्रभुरद्भुतां सताम् ।
निजाऽभिधानाऽनुगुणास्तनोति यः स्तुतक्रमः प्रार्थितसौख्यसम्पदः॥१॥
पदारविन्दं सकलेष्टसाधकं प्रणम्य तस्यैव जगत्प्रभोर्मुदा ।
तदीयसन्तानकियद्गुरुक्रमस्तवेन कुर्वे स्ववशाः शिवश्रियः ॥ २ ॥
शिवानि तस्याऽऽदिमशिष्यनायकस्तनोतु सङ्घाय स गौतमो गुरुः ।
गणाधिपख्यातिधरोऽपि शङ्करो बभूव लोके पुरुषोत्तमश्च यः ॥ ३ ॥
जाते समं वीरजिनेन वादे विभावग्रामो जयमेव तस्य ।
अगोत्रजोऽप्येष यदस्य कोशं रत्नत्रयाढ्यं स्ववशीचकार ॥ ४ ॥
क्षमाधरेन्द्रस्तनुतां स पञ्चमः श्रीमान् सुधर्मा २ गणभृत् सुखश्रियम् ।
विभाति गङ्गेव यदुत्थसन्ततिः पुरः पुरो [1]विस्तृतिभाक् स्वपाविनी॥५॥
शिष्योऽस्य जम्बू ३ र्ददतां शिवं सतामपश्चिमः केवलसम्पदः पतिः ।
न्ययुङ्क्त यः पुण्यवसूनि रक्षितुं प्रभुर्विवेकी परिमोषिणोऽप्यहो ! ॥६॥
आरक्षको वीरविभोर्न जम्बूसमोऽभवत् पञ्चशतानि चौरान् ।
चक्रे समं यश्चरणे नियम्य शिवाध्वरक्षैकरतान् मुमुक्षून् ॥ ७ ॥
प्राव्राजीद् यो भगवान् परिहृत्य द्रविणकोटिनवनवतिम् ।
सञ्जनितजनकजननीजायाचौरादिसम्बोधः ॥ ८ ॥
प्रभुः स जीयात् प्रभवो ४ महामतिर्जम्बूगुरोः कोशहरः सुचौरराट् ।
यो रत्नकोटीः परिमुच्य गेहगा रत्नत्रयं मानसभूस्थमप्यलात् ॥ ९ ॥

---

१ विस्तर इति च पाठः ।

शय्यम्भव५स्तत्पदमण्डनः सतां तनोतु तातो मनकस्य सम्पदः ।
अजीगमद् यो जिनराजदर्शनं सुदर्शनं मुक्तिरमानिदर्शनम् ॥ १० ॥
सूरिर्यशोभद्र६इति प्रसिद्धः शिष्यस्तदीयः स ददातु भद्रम् ।
गजाऽब्धिचन्द्र१४८प्रमिते गुरुर्यो बभूव वर्षे जिनमोक्षकालात् ॥११॥

सम्भूतविजयनामा ७ तस्य विनेयस्तनोतु शं प्रथमः ।
यत्पदपद्मोपान्ते प्रव्रजितः स्थूलभद्रगुरुः ॥ १२ ॥
अपश्चिमः पूर्वभृतां द्वितीयः श्रीभद्रबाहुश्च ७ गुरुः शिवाय ।
कृत्वोपसर्गादिहरस्तवं यो ररक्ष सङ्घं धरणार्चितांह्रिः ॥ १३ ॥

निर्यूढसिद्धान्तपयोधिराप स्वर् यश्च वीरात् खनगेन्दुवर्षे १७० ।
तयोर्विनेयः कृतविश्वभद्रः श्रीस्थूलभद्रश्च ८ ददातु शर्म ॥ १४ ॥
स्त्रीसङ्गवह्नावपि यस्य शीलद्रुमोऽभवत् पल्लवपेशलश्रीः ।
सूत्राच्च पूर्वाणि चतुर्दशाऽपि बभार यो दर्शितलब्धिलीलः ॥१५॥
(विशेषकम्)

तिथिद्विसङ्ख्ये २१५ त्रिदिवं गतस्य तस्याऽब्दके वीरजिनेन्द्रमुक्तेः ।
महागिरि ९ स्तत्प्रथमो विनेयः श्रियेऽभवद् यो जिनकल्पिकल्पः ॥१६॥
जीयात् सुहस्ती९ च गुरुर्द्वितीयो योऽबूबुधत् सम्प्रतिभूविभुं तम् ।
अचीकरद् यो जिनसद्मरम्यां पृथ्वीं त्रिखण्डाधिपतिः सुदाता॥१७॥
स गुरुर्विधुनिधिपाणिप्रमिते २९१ वीराद् गतोऽब्दके स्वर्गम् ।
सुस्थितसुप्रतिबुद्धौ कोटिककाकन्दिकौ शिष्यौ १० ॥ १८ ॥

तस्याऽभूतां चोभौ कोटिकनामाऽभवच्च तद्गच्छः ।
कोट्यंशः श्रीवज्रं यावदभूत् सूरिमन्त्रो यत् ॥ १९ ॥
तत्रेन्द्रदिन्नसूरिः११श्रीदिन्न१२श्चाभवत् पदे तस्य ।
सिंहगिरि१३स्तस्यापि हि वज्रस्वामी१४ च तच्छिष्यः ॥२०॥
या प्रज्ञा यच्च सौभाग्यं यः प्रभावश्च या मतिः ।
श्रीमद्वज्रगुरावासंस्तानि नाऽन्यत्र विष्टपे ॥ २१ ॥

१ 'कोटीशः' इत्यपि । २ 'प्रभा' इति च ।

नभोगविद्याकृतसङ्घरक्षः स वज्रशाखाप्रभवस्य मूलम् ।
ददातु भद्रं दशपूर्व्यधीशो बाल्येऽपि जातिस्मृतिमान् सुराऽर्च्यः ॥२२॥
स्ववेददन्तीषुमित५८४स वर्षे यातो जिनात् प्रेष्य निजं विनेयम् ।
सोपारके श्रीमति वज्रसेनं तदा चतुर्बन्धुविबोधहेतोः ॥ २३ ॥
श्रीवज्रसेना१५च ततो बभूवुः कुलानि चत्वारि सुविस्तृतानि ।
नागेन्द्रचान्द्रे अथ नैर्वृतं च वैद्याधरं वादिजसूरिनाम्ना ॥ २४ ॥
विचित्रशाखाकुलगच्छमूलं नैके बभूवुर्गुरवश्च तेषु ।
प्रणम्य तांश्चान्द्रकुलेऽथ सूरीन् स्तवीमि कांश्चिन् क्रमतो गणेन्द्रान् ॥
नखर्तुवर्षेऽथ६२० जिनाद् दिवं स श्रीवज्रसेनोऽधिगतः श्रियेऽस्तु ।
श्रीचन्द्रसूरि १६ श्च पदे तदीयेऽभवद् गुरुश्चन्द्रकुलस्य मूलम् ॥२६॥

एवं क्रमेण गुरवः प्रोक्ताः क्वचन क्रमान्तरेणापि ।
भव्यानां भवभीतिं हरन्तु तन्वन्तु च श्रेयः ॥२७॥

अथो गुरुश्चन्द्रकुलेन्दुदेवकुलादिवासोदितनिर्ममत्वः ।
सामन्तभद्रः१७श्रुतदिष्टशुद्धतपस्क्रियः पूर्वगतश्रुतोऽभूत् ॥ २८ ॥
वृद्धस्ततोऽभूत् किल देवसूरिः १८ शरच्छते विक्रमतः सपादे १२५ ।
कोरण्टके यो विधिना प्रतिष्ठां शङ्कोर्व्यधाद् नाहडमन्त्रिचैत्ये ॥२९॥
प्रद्योतनः सूरि१९ रभून् पदेऽस्य ततोऽपि चासीद् गुरुमानदेवः२०।
यस्यांसयोर्गीःकमले समीक्ष्य साक्षात्प्रतिष्ठासमये पदस्य ॥ ३० ॥
भ्रंशोऽस्य भावीति विचारणातो विखिन्नचित्तं गुरुमाकलय्य ।
तत्याज यो भक्तकुलप्रभिक्षामाजीवितान्तं विकृतीश्च सर्वाः ॥ ३१ ॥

(युग्मम्)

पद्मां जयां च विजयामपराजितां च
साक्षाद्यदंह्रिसमुपास्तिपरां निरीक्ष्य ।
नारीवृतोऽयमिति निर्मितदुर्विकल्पं
कञ्चिद् नरं लघुविमुग्धमशिक्षयंस्ताः ॥ ३२ ॥

वर्षासु नड्डूलपुरस्थितोऽपि शाकम्भरीनाम्नि पुरे प्रभूताम् ।
तदागतश्राद्धगणाऽर्थनातः शान्तिस्तवाद् मारिमपाहरद् यः ॥ ३३ ॥

य: संयमाढ्यमुनिपञ्चशतीगणेन्द्र:
सर्वातिशायिमहिमा गुणरत्नवार्द्धि: ।
निन्ये जिनेश्वरमतं परमां प्रतिष्ठां
श्लाघ्य: स कस्य न गुरु: खलु मानदेव: २० ॥३४॥
आसीत् ततो दैवतसिद्धिऋद्ध: श्रीमानतुङ्गोऽथ गुरु:२१ प्रसिद्ध: ।
भक्तामराद् बाणमयूरविद्याचमत्कृतं भूपमबोधयद् य: ॥ ३५ ॥
भयहरत: फणिराजं यश्चाकार्षीद् वशम्वदं भगवान् ।
भक्तिभरेत्यादिनमस्कारस्तवदृब्धबहुसिद्धि: ॥ ३६ ॥
जज्ञे चैत्ये प्रतिष्ठाकृन्नेमेर्नागपुरे नृपात् ।
त्रिभिर्वर्षशतै:३००किञ्चिदधिकैर्वीरसूरिराट् २२ ॥ ३७ ॥
क्रमाद् बभूवुर्जयदेव २३ देवानन्दौ २४ गुरू विक्रमसूरिराट् २५ च ।
नरादिसिंह२६श्च गुरुर्नरादिसिंहे पुरे बोधितहिस्रयक्ष: ॥ ३८ ॥
खोमाणभूभृत्कुलजस्ततोऽभून् समुद्रसूरि: २७ स्ववशं गुरुर्य: ।
चकार नागह्रदपार्श्वतीर्थे विद्याम्बुधिर्दिग्वसनान् विजित्य ॥ ३९ ॥
अभूद् गुरु: श्रीहरिभद्रमित्रं श्रीमानदेव: पुनरेव सूरि: २८ ।
यो मान्द्यतो विस्मृतसूरिमन्त्रं लेभेऽम्बिकास्यात् तपसोज्जयन्ते ॥४०॥
जज्ञे श्रीविबुधप्रभोर्गुरु २९ रद:पट्टे च विद्यानिधि-
र्विश्वानन्दकरो गुणैरथ जयानन्द ३० स्तत: सूरिराट् ।
नड्डूलाह्वपुरे प्रतिष्ठितवरश्रीनेमिचैत्यस्ततो-
ऽप्यासीद् वर्षशतै रविप्रभगुरु:३१श्रीविक्रमात् सप्तभि:७०० ॥४१॥
अजनि रजनिजानिर्नागरब्राह्मणानां
विपुलकुलपयोधौ श्रीयशोदेवसूरि: ३२ ।
प्रवरचरणचारी भारतीकण्ठनिष्का-
भरणविरुदधारी शासनोद्द्योतकारी ॥ ४२ ॥
प्रद्युम्नसूरिश्च ततो बभूव प्रद्युम्नदर्पानलवारिवाह: ।
प्रणीतसद्युक्त्युपधानवाच्यग्रन्थश्च तस्मादपि मानदेव: ॥ ४३ ॥
( केचिदिदं सूरिद्वयमिह न वदन्ति )

ततः प्रसिद्धोऽजनि चित्रकूटे स हेमसिद्धिर्विमलेन्दुसूरिः ३३ ।
अपूजयद् यं विषमेऽपि वादे सद्यो जिते गोपगिरेर्नरेन्द्रः ॥ ४४ ॥
तत्पट्टभूषाकृदभूद् मुनीनां त्रिभिः शतैः सेव्यपदः सदाऽपि ।
उद्द्योतनः सूरि ३४ रवद्यहीनविद्यानदीविश्रमसिन्धुनाथः ॥ ४५ ॥
समस्त्यथो शैलकुलावचूलः श्रीअर्बुदस्तीर्थपवित्रितात्मा ।
नानापुरग्रामतटाकवापीधुनीवनभ्राजिततुङ्गमौलिः ॥ ४६ ॥
कथं भवेद् नो हिमधामभूभृतस्तनूभुवः क्षोणिधरेषु राजता ।
नीचैर्लुठद्भिः किल यस्य सर्वतः पादा निषेव्या विविधैः क्षमाधरैः॥४७॥
यन्मूर्ध्नि गोपीगणकेलिगीतश्रीमद्युगादीशगुणामृतानाम् ।
ग्रहाः प्रयान्तश्चिरपानलोलाः सर्वेऽपि वाञ्छन्ति शनैश्चरत्वम् ॥४८॥
यदुच्चशृङ्गेषु मृगैश्चरद्भिर्मिलन्निवधोरङ्कमृगः प्रयातः ।
हयैर्हयाश्चार्करथस्य युक्ताः स्वजातिजाऽऽतिथ्यसुखं लभन्ते ॥ ४९ ॥
यदुच्चमौलिस्थितकाननेषु तमीषु सर्वासु विभान्ति वृक्षाः ।
शाखागणान्तर्गततारकौघा इवाऽखिलर्तूद्गतपुष्पगुच्छाः ॥ ५० ॥
विभाति नानाविधनन्दनाश्रितो यो भद्रशालावलिभिस्तथाऽऽचितः ।
परिस्फुरन्निष्प्रमपाण्डुकम्बलो बिभ्रत्सुमेरोरतिशायिनीं श्रियम् ॥ ५१ ॥
यन्मौलिमौलिः प्रभुरादिमोऽर्हतां चकास्ति नागेन्द्रमुखैः प्रतिष्ठितः ।
उच्चैः पदं यान्ति निर्नसयाऽपि मे पराङ्मुखाश्चाध इतीव दर्शयन् ॥५२॥
चतुर्नवत्याऽभ्यधिकैः शरच्छतैः श्रीविक्रमार्काद् नवभिः स सूरिराट् ।
पूर्वावनीतो विहरन्नथागमद् यात्राकृते तस्य गिरेरुपत्यकाम् ॥ ५३ ॥
टेलीखेटकसीमसंस्थितवटस्याधः पृथोस्तत्र सः
प्राप्तः श्रेष्ठतमं मुहूर्तमतुलं ज्ञात्वा तदाऽतिष्ठिपत् ।
सूरीन् सौवकुलोदयाय भगवानष्टौ जगुस्त्वेककं
केचिद् वृद्धगणोऽभवद्वटगणाभिख्यस्तदादि९९४त्वऽयम् ॥५४॥
न्यग्रोधगच्छेऽथ बभूव तस्मिन् श्रीसर्वदेवः ३५प्रथमो मुनीन्द्रः ।
श्रीसूरिमन्त्रातिशयर्द्धिधारी विश्वोपकारी गणिसंपदाढ्यः ॥ ५५ ॥
चरित्रशुद्धिं विधिवज्जिनागमाद् विधाय भव्यानभितः प्रबोधयन् ।

चकार जैनेश्वरशासनोन्नतिं यः शिष्यलब्ध्याऽभिनवोऽनु गौतमः॥५६॥
नृपाद् दशाग्रे शरदां सहस्रे १०१० यो रामसैन्याह्वपुरे चकार।
नाभेयचैत्येऽष्टमतीर्थराजबिम्बप्रतिष्ठां विधिवत् सदर्च्यः ॥ ५७ ॥
चन्द्रावतीभूपतिनेत्रकल्पं श्रीकुङ्कुणं मन्त्रिणमुच्चऋद्धिम्।
निर्मापितोत्तुङ्गविशालचैत्यं योऽदीक्षयत् शुद्धगिरा प्रबोध्य ॥५८॥
एकोनविंशः प्रभुवर्धमानात् श्रीचन्द्रसूरि१९र्गणनायकोऽभूत्।
बभूव तस्मादनु चैकविंशः सूरीश्वरोऽयं किल सर्वदेवः ४०॥५९॥

श्रीप्रद्युम्नसूरिं सदुपधानग्रन्थकारकश्रीमानदेवसूरिं केचिद् न वदन्ति तन्मते, एकोनविंशः प्रभु०

एकोनविंशश्च ततोऽपि जज्ञे सूरीश्वरोऽयं किल सर्वदेवः३८इति पाठः।

श्रीसम्भूतविजयसूरि श्रीभद्रबाहुसूरि १ श्रीआर्यमहागिरिसूरि श्रीसुहस्तिसूरि २ श्रीसुस्थितसूरि श्रीसुप्रतिबुद्धसूरि ३ रूपयुगलत्रये एकैकस्यैव सन्तानप्रवर्तकपट्टभृतः सूरेर्गणने-

श्रीवर्द्धमानादिह षोडशोऽभूत् श्रीचन्द्रसूरिः खलु गच्छनेता।
एकोनविंशश्च ततोऽपि जज्ञे सूरीश्वरोऽयं किल सर्वदेवः ३५॥

इति पाठः।

अत्रैव श्रीप्रद्युम्नसूरिसदुपधानग्रन्थकर्तृश्रीमानदेवसूरिगणने च-

श्रीवर्द्धमानादिह षोडशोऽभूत् श्रीचन्द्रसूरिः१६किल गच्छनेता।
बभूव तस्मादनु चैकविंशः सूरीश्वरोऽयं किल सर्वदेवः ३७॥५९॥

इति वा पाठः।

अयं चात्र गण्यते, विशेषं तु विशेषज्ञा विदन्ति।

गच्छश्च तस्य बहुसूरिमुनीश्वराद्यै-
राढ्यत्वतो भुवि दधौ क्रमतः प्रसिद्धिम्।
विज्ञैर्बृहद्गण इति स्तुतिमाप्यमानः
सर्वैर्बृहत्तरतया चरितैर्गुणैश्च ॥ ६० ॥

शिष्यस्तत्र बभूव सद्गुणनिधिः श्रीसर्वदेवप्रभोः

---

'व्रतो' इति च।

रूपश्रीरिति भूपदत्तविरुदः श्रीदेवसूरिः ३८ प्रभुः ।
जज्ञेऽस्मान्महिमोदधिः पुनरपि श्रीसर्वदेवो ३९गुरु-
स्तस्माद् दिगृद्विरदोपमाः समभवन्नष्टौ च सूरीश्वराः ॥ ६१ ॥
आद्यो यशोभद्रगुरुर्वितन्द्रः ४०सूरिर्द्वितीयः किल नेमिचन्द्रः ४० ।
ताभ्यामभूत् श्रीमुनिचन्द्रसूरिः ४१ स्वशेमुषीतर्जितनाकिसूरिः ॥६२॥
उक्तं च–
" गुरुबन्धुविनयचन्द्राध्यापकशिष्यं स नेमिचन्द्रगुरुः ।
यं गणनाथमकार्षीत् स जयति मुनिचन्द्रसूरिगुरुः " इति ॥६३॥
यशोभद्रं च संप्रामो यशोभद्रगणाधिपः ।
चिन्तामणिमिव प्राप्य यं शिष्यं भुवनोत्तमम् ॥ ६४ ॥
श्रीविनयचन्द्रवाचकविन्ध्यगिरेस्ते जयन्तु किल पादाः ।
भद्रगजकलभलीलां श्रीमुनिचन्द्रो दधौ येषु ॥ ६५ ॥
सौवीरपायीति तदेकवारिपानाद् विधिज्ञो विरुदं बभार ।
जिनागमाम्भोनिधिधौतबुद्धिर्यः शुद्धचारित्रिषु लब्धरेखः ॥ ६६ ॥
संविग्नमौलिर्विकृतीः समस्तास्तत्याज देहेऽप्यममः सदा यः ।
विद्वद्विनेयालिवृतप्रभावः प्रभागुणौघैः किल गौतमाभः ॥ ६७ ॥
हरिभद्रसूरिरचिताः श्रीमदनेकान्तजयपताकाद्याः ।
ग्रन्थनगा विबुधानामप्यधुना दुर्गमा येऽत्र ॥ ६८ ॥
सत्पञ्जिकादिपद्या विरचनया भगवता कृता येन ।
मन्दधियामपि सुगमास्ते सर्वे विश्वहितबुद्ध्या ॥ ६९ ॥
षट्तर्कीपरितर्ककेलिरसिको यः शैववादीश्वरं
प्रज्ञाऽधःकृतवाक्पतिं नृपसभे जित्वोग्रहेत्वाशुगैः ।
प्रत्यक्षं विदुषां चकार विजयश्रीभाजनं शासनं
वन्द्योऽसौ मुनिचन्द्रसूरिसुगुरुः केषां न मेधाजुषाम् ॥७०॥
आनन्दसूरिप्रमुखा मुनीश्वराः श्लाघ्या न केषामिह तस्य बन्धवः ।
ये दीक्षिताः श्रीमुनिचन्द्रसूरिणा प्रतिष्ठिताः सूरिपदे च शिक्षिताः ॥७१॥
अष्टहयेशमिते ११७८ ऽब्दे विक्रमकालाद् दिवं गतो भगवान् ।

श्रीमुनिचन्द्रमुनीन्द्रो ददातु भद्राणि सङ्घाय ॥ ७२ ॥

तस्मादभूदजितदेवगुरु ४२ र्गरीयान्
प्राच्यस्तपःश्रुतनिधिर्जलधिर्गुणानाम् ।
श्रीदेवसूरिरपरश्च जगत्प्रसिद्धो
वादीश्वरोऽस्तगुणचन्द्रमदोऽपि बाल्ये ॥ ७३ ॥

येनार्दितश्चतुरशीतिसुवादिलीला-
लब्धोल्लसज्जयरमामदकेलिशाली ।
वादाहवे कुमुदचन्द्रदिगम्बरेन्द्रः
श्रीसिद्धभूमिपतिसंसदि पत्तनेऽस्मिन् ॥ ७४ ॥

स्याद्वादरत्नाकरतर्कवेधा मुदे स केषां नहि देवसूरिः ।
यतश्चतुर्विंशतिसूरिशाखं यस्यैव नाम्ना विदितं बभूव ॥ ७५ ॥

वेदमुनीशमितेऽब्दे ११७४ देवगुरुर्जगदनुत्तरोऽभ्युदितः ।
श्रीमुनिचन्द्रगुरोरिति शिष्या बहवोऽभवन् विदिताः ॥ ७६ ॥

तेष्वादिमाद् विजयसिंहगुरु ४३र्बभासे
विद्यातपोभिरभितः प्रथमोऽथ तस्मात् ।
सोमप्रभो ४४मुनिपतिर्विदितः शतार्थी-
त्यासीद् गुणी च मणिरत्नगुरुर्द्वितीयः ॥ ७७ ॥

प्रज्ञापराभूतसुपर्वसूरिः श्रीसर्वदेवान् स किलाष्टमोऽभूत् ।
मुदं भदन्ताः ! ददतां तदेवं बृहद्गणस्य प्रभवः क्रमेण ॥ ७८ ॥

इति श्रुतः सच्चरणश्रियः पदं न दीनताभाक् पुरुषोत्तमालयः ।
अमेयभास्वद्गुणरत्नसङ्गतो बृहद्गणो वारिधिवद् बभूव सः ॥७९॥

अभूत् तदुल्लासनलालसोदयो विनेयवृत्तिर्मणिरत्नसद्गुरोः ।
गवां विलासैरमृतं निदर्शयन् श्रीमान् जगच्चन्द्रगणेन्द्रचन्द्रमाः ॥८०॥

स सौम्यमूर्तिः सकलागमानां सूत्रेष्वधीती परिनिश्चितार्थः ।
संविग्नमौलिर्दधते स्म सूरेर्गुणान् समग्रान् गणिसम्पदश्च ॥ ८१ ॥

अथ कलिघनदुर्दिनावतारे प्रसरदसज्जडसञ्चये समन्तात् ।
प्रतिहतजिनराजभानुतेजोमहिमभरेऽनवबोध्य मुक्तिमार्गे ॥ ८२ ॥

निजगणसरणौ प्रमादपङ्के चरणरथं प्रविलोक्य गाढमग्नम् ।
गुरुरयमसमस्तमुद्दिधीर्षुर्वृषभ इवाऽपरमीक्षते सहायम् ॥ ८३ ॥
( युग्मम् )

अथ चैत्रपुरे वीरप्रतिष्ठाकृद् धनेश्वरः ।
चन्द्रगच्छेऽभवत् सूरिस्तस्माद् चैत्रगणोऽभवत् ॥ ८४ ॥
कालाद् भुवनचन्द्राह्वस्तत्र जज्ञे गुरुर्गुणी ।
शुद्धसंयमधीस्तस्माद् देवभद्रश्च वाचकः ॥ ८५ ॥
संवेगरङ्गाऽम्बुधिधौतबुद्धिं जिनागमात् कल्पचरित्रशुद्धिम् ।
विधीयमानाऽऽर्हतधर्मवृद्धिं शुद्धैर्गुणैः प्राप्तजगत्प्रसिद्धिम् ॥ ८६ ॥
अधीतिनं सारजिनागमानां सूत्रेषु चाऽर्थेषु च वेदिनं च ।
आम्नातिनं साधुविशुद्धसामाचार्यां प्रवृत्तं च यथावदस्याम् ॥८७॥
श्रीदेवभद्राभिधवाचकेन्द्रं तं श्रीजगच्चन्द्रगुरुः प्रबुद्धः ।
अथोपसम्पद्विधिना प्रपद्य स तद्द्वितीयो धुरमस्य दध्रे ॥ ८८ ॥
( विशेषकम् )

समुद्धृतः सोऽथ वृषोत्तमाभ्यां ताभ्यामभूत् सर्वधुरीणकाभ्याम् ।
स्वारूढनिस्सङ्कल्यमुमुक्षुमोक्षपुरेन्दिराप्रापणशक्तिशाली ॥ ८९ ॥
एवं रामगुणः स लक्ष्मणनतः शुद्धक्रियां स्वप्रियां
प्रौढोग्रत्कलिनाऽरिणा *वनभुवः किञ्चिद् प्रमादाद् हृताम् ।
तीर्त्वा मोहमहाम्बुधिं रिपुमिमं जित्वाऽखिलङ्कं श्रय-
न्नानिन्ये स्वगणालये किल जगच्चन्द्रो गणेन्द्रस्तदा ॥ ९० ॥
कलौ युगान्तोपमितेऽवतीर्णे प्रमादपङ्काकुलमोहवार्द्धेः ।
तथाऽऽर्हतं शासनमुद्दधार स भूतलं त्वादिमहावराहः ॥ ९१ ॥
गुरुर्ममत्वं न कदापि भेजे ग्रामे कुले वा नगरे च देशे ।
शरीरशय्योपधिषु प्रमादं स दूरयन् गां विजहार चाऽथ ॥ ९२ ॥
तुलारोहेऽत्र बोभोति नीचत्वं भास्वतोऽपि हि ।
इतीव जगति त्रैधे स तुलातिक्रमं व्यधात् ॥ ९३ ॥

---

* पक्षेऽवनभुव इति बोद्धव्यम् ।

समानपदयोगेऽपि तत्प्रभां नाऽऽपुरन्यके ।
मेषयाने समानेऽपि भास्वानुष्णोऽमितोऽन्यथा ॥ ९४ ॥
यावज्जीवितमाचामाम्लतपोऽभिग्रही व्यधात् तानि ।
द्वादशवर्षाण्यङ्केऽप्यममोऽसौ श्लाघ्यधीर्भगवान् ॥ ९५ ॥
तदादिबाणद्विपभानुवर्षे १२८५ श्रीविक्रमात् प्राप तदीयगच्छः ।
बृहद्गणाह्वोऽपि तपेतिनाम श्रीवस्तुपालादिभिरर्च्यमानः ॥ ९६ ॥
वीराच्छरेष्वश्वधरामितेऽब्दे १७५५ श्रीचन्द्रगच्छस्य ततो बभूव ।
तादृक्तपस्कर्मत एव तस्य गुरोस्तपानाम जगत्प्रसिद्धम् ॥ ९७ ॥
श्रीचन्द्रगच्छोऽथ बृहद्गणश्च तपागणश्चेत्यधुना स वाच्यः ।
चान्द्रं कुलं कोटिकनाम्नि गच्छे वार्ज्ञी च शाखेति पुरा प्रसिद्धिः॥९८॥

गणं प्रमादो न न जाड्यमेषणा-
दोषा न तस्मिन् गणनायकेऽवति ।
न वादिनो वा तमिहापदुद्रुवुः
सुरक्षकं क्षेत्रमिवाण्डजव्रजाः ॥ ९९ ॥
कलिद्विपा भग्नपदस्थितिस्त्रसन्
परासुतासन्नदशोऽपि तं गणम् ।
दुर्गं नु लब्धाऽस्य विभोः समाश्रया-
च्चरित्रधर्मः पुनरुज्जिजीव सः ॥ १०० ॥

श्रीदेवेन्द्रमुनीन्द्रो गच्छे विजयेन्दुनामकश्चापि ।
श्रीदेवभद्रवाचकमुख्या भूषाकृतस्तस्य ॥ १०१ ॥
चारित्रोद्धरणसखेऽभ्यधिकं श्रीदेवभद्रगणिराजे ।
बहुमानं वहमानो गुरुवद्गणनां चकारैषः ॥ १०२ ॥
देवभद्रगणीन्द्रोऽपि संविग्नः सपरिच्छदः ।
गणेन्द्रं श्रीजगच्चन्द्रमेव भेजे गुरुं मुदा ॥ १०३ ॥
जात्यज्ञानतपस्तेजा हीरवत् स गुरुष्वऽभात् ।
तेन हीरजगच्चन्द्रसूरिरित्यभवत् श्रुतः ॥ १०४ ॥

विशेषश्चैवं श्रूयते—

देव्या गिरो भवनगं स्वधियाऽधिगम्य
सारस्वतं किमपि यन्त्रमगम्यमन्यैः ।
तस्याः प्रसादवशतो नृपतेः सभाया-
माघाटनामनि पुरे चतुरङ्गवादे ॥ १०५ ॥
द्वात्रिंशतं विकटदिक्पटवादिराजान्
द्राग् सार्ववैद्यविदुरानजयत् क्रमात् सः ।
भग्नो न हीर इव कैश्चिदिति प्रसिद्धं
भूपात् तदाऽऽप विरुदं किल हीरलेति ॥ १०६ ॥
( युग्मम् )

तेन स्वस्य पदे न्यस्तौ देवेन्द्रविजयेन्दुकौ ।
सूरीन्द्रौ शासने भातौ जम्बूद्वीपे रवी इव ॥ १०७ ॥
शिष्येऽन्यदा सर्वधुरीणवृत्तौ देवेन्द्रसूरौ स गणस्य भारम् ।
विन्यस्य विश्वस्य हराविवेन्द्रः स्वःशर्म भेजेऽथ शिवाय वोऽस्तु ॥१०८॥
अथो जगच्चन्द्रमुनीन्द्रपट्टभृत् श्रीमान् स देवेन्द्रगुरुः ४६ शमाम्बुधिः ।
नाम्ना गुणैरप्यभवद् गुरोः समो महाप्रभाभूः शिवभूतिदायकः ॥१०९॥
स दिद्युते बालसुधाकरप्रभः प्रभुर्भवाधःकृतिकर्मनिर्मितौ ।
सदर्चनीयो विबुधालितुष्टिकृद् निरञ्जनैकोदितपुण्यसत्कलः ॥ ११० ॥
समग्रविद्यातपसां प्रणतृताप्रणीतसन्मानसविस्मयाऽद्वयः ।
स जग्रसेऽन्याखिलसूरिमण्डलीमहांसि माद्यन्महिमैककान्तिभिः ॥१११॥
सोऽभूद् गुरुः कोऽपि नवः कविस्तुतो
मित्रारमाध्यस्थ्यधरो बुधप्रियः ।
तत्त्वोक्तिभिर्नास्तिकदर्शनं क्षिपन्
शिवङ्करो मार्गयुतोऽपि देहिनाम् ॥ ११२ ॥
किं सर्वागमदुग्धवारिधिभवाः स्फारा लहर्यो ह्यमूः
किं मोहाहिविषोर्मिमूर्च्छितजगज्जीवातवोऽग्र्याः सुधाः ।
किं वा शासनसौधभासनचणा दीप्राः प्रदीपश्रियो
भावध्वान्तभिदः सतामिति मतिं तेनुस्तदीया गिरः ॥ ११३ ॥

श्रीस्तम्भतीर्थकुमरप्रासादे सर्ववेदनिर्णेतुः ।
व्याख्यानेऽस्याऽष्टादशशतानि मुखपोतिका आसन् ॥ ११४ ॥
वाचकपदं द्विधापि च दधति सुघोषाढ्यहेमकलशगणौ ।
सभ्येषु वस्तुपालादिषु नौवित्तद्विजादिषु च ॥ ११५ ॥
षट्दर्शनिसाधारणबोधकृतस्तस्य सद्गुरोर्वाचः
सौभाग्यमाहिमभारं तदाऽभजन् कश्चनाऽमेयम् ॥ ११६ ॥
सारवृत्तिदशाः कर्मग्रन्थदीपास्तमोहराः ।
तस्य प्रवचनावासे भान्ति प्रेष्ठार्थदर्शकाः ॥ ११७ ॥
नानास्तवनप्रकरणरत्नानि समुद्धृतानि समयाब्धेः ।
पुरुषोत्तमेन तेनाऽलङ्कृतये शासनस्यासन ॥ ११८ ॥
पञ्चाशिकासिद्धविचारवाच्या भाष्याणि वृत्तं च सुदर्शनायाः ।
उपासकानां दिनकृत्यसूत्रवृत्ती च टीकाऽपि च धर्मरत्ने ॥ ११९ ॥
देवेन्द्राङ्का श्राद्धयामोद्यभङ्गिग्रन्थाद्याऽन्याप्यस्त्यनेकाऽस्य सृष्टिः ।
एवं नानाग्रन्थसोपानपङ्क्त्या स्वारोहं तन्मुक्तिसौधं व्यधात् सः ॥१२०॥
( युग्मम )

योऽभूत् तदीयोऽथ लघुः सतीर्थ्यस्तदाऽऽग्रहादाऽऽप्तपदप्रतिष्ठः ।
सूरिः सुविद्वान् विजयेन्दुनामा प्रावर्त्तयत् सोऽथ पृथक् स्वशाखाम् १२१

इति चेह तत्सम्बन्धः श्रूयते तथाहि—

पुरा विजयचन्द्रोऽभूद् वस्तुपालस्य मन्त्रिणः ।
सचिवो लेख्यके देये क्षिप्तः कारागृहेऽन्यदा ॥ १२२ ॥
देवभद्रगणीनां स द्विधा शिक्षाकृतेऽर्पितः ।[1]
नाम्ना विजयचन्द्रोऽभूत् प्राक् तदाप्याप्तशास्त्रवित् ॥ १२३ ॥
श्रीजगच्चन्द्रगच्छेशैः शिष्यवात्सल्यशालिभिः ।
न्यस्तः सूरिपदे देवभद्रगण्युपरोधतः ॥ १२४ ॥
साहाय्यायाऽपि देवेन्द्रः सूरीन्द्राणां गणाऽवने ।

---

१ ' देवभद्रगणीन्द्रैः स बोधितो मन्त्रिराजतः ।
*विमोच्य श्रीजगच्चन्द्रसूरिपार्श्वेऽग्रहीद् व्रतम '* ॥ १२३ ॥ इत्यपि पाठः ।

अर्हंयुत्वान्निषिद्धोऽपि वस्तुपालेन मन्त्रिणा ॥ १२५ ॥
श्रीजगच्चन्द्रसूरीन्द्रे स्वर्गतेऽसावनेहसम् ।
कियन्तं विनयी जज्ञे श्रीदेवेन्द्रगणेश्वरे ॥ १२६ ॥
विहरत्यन्यदा तस्मिन् गणेन्द्रे मालवे चिरम् ।
तस्थौ श्रीस्तम्भतीर्थेऽसौ पूजितः पूर्वसंस्तुतैः ॥ १२७ ॥
चैत्यादिद्रव्यसंस्कारदूषिता बृहतीति या ।
प्रसिद्धा तत्र शालाऽभूद् वृद्धगच्छगुरुस्थितेः ॥ १२८ ॥
पार्श्वस्थाऽवस्थता भुक्ता त्यक्ता शुद्धक्रियादृतौ ।
श्रीजगच्चन्द्रसूरीन्द्रैर्देवेन्द्रगुरुणाऽपि सा ॥ १२९ ॥
तस्यां लोकानुरोधेन नित्यवासप्रमादभाक् ।
आत्मसात्कृतलोकोऽसौ तस्थौ द्वादशवत्सरीम् ॥ १३० ॥
सामाचारीं स दुष्पालां किञ्चिच्छिथिलयन्नपि ।
गच्छमावर्जयामासानुकूलाचरणादिभिः ॥ १३१ ॥
गुर्वादेशं विना दीक्षादीनि कार्याणि चाऽसृजत् ।
आगतेऽथ गणाधीशे विनयं नाकरोत् तथा ॥ १३२ ॥
नोदितो नित्यवासेऽपि निर्ममेत्यादि सोऽपठत् ।
आचारभ्रंशभीरुस्तत् श्रीदेवेन्द्रगणाधिपः ॥ १३३ ॥
संविग्नपरिकराख्यो बोधानर्हं प्रमादिनं ज्ञात्वा ।
पुस्तकशालादियुतं तं मुक्त्वाऽस्थात् पृथग्वसतौ ॥ १३४ ॥
( युग्मम् )
देवेन्द्रसूरिसुगुरोः ख्याताः शिष्यास्तु वृद्धशालायाः ।
संविग्नत्वाच्च गुरुर्विज्ञैरर्च्यः स एवासीत् ॥ १३५ ॥
विजयेन्दुविनेयाश्च ख्याता मुग्धेषु वृद्धशालायाः ।
विज्ञाः पुनर्जगुस्तान् लघुगुरुशालाभवान् युक्तम् ॥ १३६ ॥
संग्रामसौवर्णिकपूर्वजस्तदा पार्थक्यमालोक्य गुरुद्वयस्य तत् ।
श्रयामि कं नन्विति संशयाकुलः सदैवतं बिम्बमुपास्थिताऽर्हतः ॥१३७॥

---

१ 'बहिर्वृत्त्यैव धिक् कलिम्' इत्यपि ।

देवेन्द्रसूरिर्भरतोत्तमो गुरुर्युगोत्तमाभो भविता महान्वयः ।
तमेव सेवस्व यदीहसे शिवं तमादिदेशेति च देवता निशि ॥ १३८ ॥

दत्तशुद्धवसतिस्ततोऽभजत्तं गुरुं स बहुनैगमान्वितः ।
दापितस्वजनसंयमो मुदेतीभ्यभीमप्रमुखाः परेऽपि च ॥ १३९ ॥

श्रीदेवेन्द्रमुनीन्दोर्विद्यानन्दादयोऽभवन शिष्याः ।
लघुशाखायां तु गुरोर्विजयेन्दोश्च त्रयः पट्टे ॥ १४० ॥

श्रीवज्रसेनसूरिः पद्मेन्दुः क्षेमकीर्तिसूरिश्च ।
रदविश्वमिते १३३२ वर्षे विक्रमतः कल्पटीकाकृत् ॥ १४१ ॥

अथ हेमकलशसूरिस्तत्पदमौलिर्गुरुर्यशोभद्रः ।
रत्नाकरस्ततोऽपि च शिष्यो रत्नप्रभश्चाऽस्य ॥ १४२ ॥

मुनिशेखरस्तदयिः शिष्यः श्रीधर्मदेवसूरिरपि ।
श्रीज्ञानचन्द्रसूरिः सूरिः श्रीअभयसिंहश्च ॥ १४३ ॥

अथ हेमचन्द्रसूरिर्जयतिलकाः सूरयस्ततो विदिताः ।
जिनतिलकसूरयोऽपि च सूरिर्माणिक्यनामा च ॥ १४४ ॥

कालानुभाववशतः शाखापार्थक्यचेतसो ह्यधुना ।
सर्वे ते गुणवन्तो ददतां भद्राणि मुनिपतयः ॥ १४५ ॥

अथ वृद्धगुरोः शाखा प्रस्तुता स्तूयतेऽग्रतः ।
विनयातिक्रमो नास्ति यस्यां काले कलावपि ॥ १४६ ॥

देवेन्द्रसूरिः स गुरुर्गुणोत्तरो बभूव संवेगरमानिकेतनम् ।
समुद्धरन् धीरतयोग्रदुःषमापङ्कौघसंपाति जिनेन्द्रशासनम् ॥१४७॥

विश्वैकस्पृहणीयरूपसुभगां त्रैलोक्यकुक्षिम्भरिं
तत्कीर्तिं नु विधाय शेषदलकैश्चक्रे विधातोज्ज्वलान् ।
कैलासं भुजगेश्वरं हरमिभं वाहं च नाकिप्रभोः
क्षीराम्भोनिधिमिन्दुकुन्दकुमुदप्रालेयशङ्खादिकान् ॥ १४८ ॥

किं त्रातुं समवातरत् सुगतवद् वीक्ष्याऽर्दितं शासनं
स्वं सर्पत्कलिना गतोऽपि हि शिवं श्रीमान् सुधर्मा भुवि
किं वाऽयं गुरुगौतमः किमथवा श्रीवीरनेता स्वयम्

तस्मिन्नित्यभवन् युगोत्तमगुणाधारे विकल्पाः सताम् ॥ १४९ ॥
निश्शेषस्वपरागमार्थनिलयः षट्तर्क्यभिज्ञाग्रणीः
कोशः सद्गणिसंपदां त्रिजगतः सारैरिवात्तैः कृतः ।
भारत्याश्च रणश्रियश्च भरतोत्कृष्टः पतिः सोऽभव-
न्नान्यस्त्वाऽऽर्हतशासनोपनिषदस्तस्योपमानं गुरोः ॥ १५० ॥
प्रायेण वंशाः पृथवोऽपि मूलतः परे तनुत्वं दधते पुरः पुरः ।
अमुष्य वंशस्तु दधौ विशालतां मूले तनीयानपि चाग्रतोऽग्रतः॥१५१॥
तथाहि–
अथागमद् सूरिरयं विदूरयंस्तमस्ततिं मालवमण्डलावनौ ।
तत्रोज्जयिन्यां जिनचन्द्रसंज्ञयाऽभवद् महेभ्यो जिनसाधुभक्तिभृत् ॥
अस्ति वीरधवलाह्वयस्य स स्वाङ्गजस्य करपीडनोत्सवम् ।
कारयन्नसमरूपया समं यावदिभ्यगजपालकन्यया ॥ १५३ ॥
तावदेव स गुरोः समागमं संनिशम्य नतयेऽगमद् सुतः ।
संनिपीय च सुदेशनासुधां मोहतापविलयात् प्रबुद्धवान् ॥ १५४ ॥
भीतो भवाद् तस्य गुरोः पदान्ते स मानयित्वा पितरौ प्रवीणः ।
ततः प्रवव्राज विहाय जम्बूरिव स्वबन्धून् रमणीं वृतां च ॥ १५५ ॥
विद्यानन्दाभिधः पाणिखविश्वाऽब्दे १३०२ स दीक्षितः ।
क्रमाद् विद्याम्बुधिर्जज्ञे गणिसंपत्पदं मुनिः ॥ १५६ ॥
भीमसिंहोऽनुजोऽप्यस्य गुरुणा तेन बोधितः ।
दीक्षितो धर्मकीर्त्याह्वो मुनिरासीद् गुणोदधिः ॥ १५७ ॥
धरासारतरे तुङ्गचङ्गचैत्यालिशालिनि ।
प्रह्लादनपुरेऽथागान् स गुरुर्विहरन् क्रमात् ॥ १५८ ॥
श्रीकरीयुतसुखासनयानाः कुर्वते चतुरशीतिमितेभ्याः ।
तत्र तद्गणपतेरुपदेशाद् धर्मकर्म विविधं जनताश्च ॥ १५९ ॥
प्रह्लादनविहारे तु सौवर्णकपिशीर्षके ।
तदा मूढकमानाश्चाक्षताः प्रत्यहमागमन् ॥ १६० ॥
प्रतिगोणि तु देवस्य दायं पूगीफलं जनाः ।

ददतो ददिरे प्रायो मणान्यहनि षोडश ॥ १६१ ॥

भोगं पाश्चशतीसंख्यवीसलप्रियिकं तथा ।

प्रत्यहं ससृजुः श्राद्धाः पूजामित्यपरामपि ॥ १६२ ॥

अथान्यदा प्रौढविचित्रपुण्यप्रवीणसङ्घप्रथितार्थनाभिः ।

गणाधिनेताऽभिमतं स विद्यानन्दं मुनीन्द्रं गुणलक्ष्मिपात्रम्॥१६३॥

श्राद्धैर्महेन्द्रैरिव निर्मितोत्सवैः प्रमोदि विश्वं स्वपदे न्यवीविशन्।

प्रह्लादनोर्वीपतिचैत्यमण्डपे त्रिदन्तभूमीमितवत्सरे१३२३ नृपान् १६४

केचित् १३०४ प्राहुः; तथा च-वेदाऽभ्रवह्निक्षितिवत्सरे १३०४नृपादिति पाठः विशेषनिर्णय तु विशेषज्ञा विदन्ति।

गुरोर्विनेयस्य च तैर्गुणैस्तदा सुरैः प्रहृष्टैर्महिमा व्यधीयत ।

यत्कुङ्कुमाम्भः स ववर्ष मण्डपस्तदार्चिर्लानं वसनेपु कोविदैः॥१६५॥

अम्बा पात्रावतीर्णावक् महिमानं सुरैः कृतम् ।

तज्जनेभ्यस्तदा प्रीता गुणैस्तद्गुरुशिष्ययोः ॥ १६६ ॥

विन्यस्य तं शासनभासनेन्दुमित्र प्रबोधाय गतः स भास्वान् ।

क्षेत्रान्तरं स्वर्गमिपाच्छित्रं च संघस्य देवेन्द्रगुरुस्तनोतु ॥ १६७ ॥

तादृग्गुणस्य स गुरोः स्वर्गतिमवगत्य सत्यभक्त्याऽस्मिन ।

सङ्घाधिपभीमोऽन्नं वर्षाणि द्वादशात्याक्षीन् ॥ १६८ ॥

तत्पट्टऽस्थो स प्रसिद्धप्रभावः श्रीमान् विद्यानन्दसूरिः४७श्रिय स्तान् ।

नव्योद्भिन्नं यं द्विषं वीक्ष्य मोहश्छन्नश्छन्नः कापि भीतश्चचार ॥१६९॥

विद्यानार्यो हृदयभवनेऽस्यास्तसंख्याः समन्ता-

दालिङ्ग्यैताः कथमपि गुणास्तद्वराश्चाप्यवात्सुः ।

तत्सम्भूतास्त्वतिबहुतया सद्यशोऽपत्यसङ्घा-

स्त्रैधेऽप्यस्मिन जगति न ममुः स्थानयोगाद्विवृद्धिः ॥ १७० ॥

विद्यानन्दाभिधं तेन कृतं व्याकरणं नवम् ।

भाति सर्वोत्तमं स्वल्पसूत्रं बह्वर्थसंग्रहम् ॥ १७१ ॥

वेलवोल्लासिनी तद्रीस्त्रैविद्यापारसागरे ।

चिक्षेप प्रोन्मदान् दूरं वादिनः कर्करानिव ॥ १७२ ॥

शिष्योऽथ देवेन्द्रगुरोर्द्वितीयकः
श्रीधर्मघोषः ४७ सुकृताङ्घ्रिपोषकः ।
शोषं नयन्नन्ययशः सरस्वती-
योगान् बभौ पल्लवयन् वसन्तवत् ।। १७३ ।।
दैवात् त्रयोदशदिनान्तरतो गते स्वः
शैलद्विविश्वशरदि १३२७ स्वगुरुद्वयेऽपि ।
यो वाचकोऽधिगतसूरिपदः स्वगोत्रि-
सूरेर्जघान किल मत्सरिणां कदाशाः ।। १७४ ।।
स च श्रीधर्मकीर्त्याह्वः श्रीविद्यानन्दबान्धवः ।
जित्वा मत्सरिणः शक्त्या भविश्वाब्देऽ १३२८भवद्गणी ।।१७५।।
तपस्क्रियोत्कर्षितसद्गुणश्रिया प्रकृष्टसौभाग्यरमानिकेतनम् ।
समृद्धयोऽष्टावपि तं युगोत्तमं समं श्रिता निर्मितकार्मणा इव ।।१७६।।
अथान्यदा मालवमण्डलावनेर्विभूषणे मण्डपदुर्गनामनि ।
पुरे स पृथ्वीधरसाधुमार्हतं प्राबूबुधद् धर्ममुदारधीर्गुरुः ।। १७७ ।।
त्रिकालवेत्ता भगवान् स पञ्चमव्रतेऽपि लक्षा द्रविणस्य मुत्कलाः ।
अनाढ्यमप्येतमचीकरत् प्रभुः प्रपन्नसम्यक्त्वचतुस्त्रिकव्रतम् ।।१७८।।
स च क्रमाद् मालवमण्डलेशितुः प्रजाभिरर्च्यं सचिवत्वमाश्रितः ।
बभूव ऋद्धया धनदोपमो हि किं न ज्ञानिनां भाग्यवतां च गोचरे ? १७९
भुवं स चैत्यैर्हृदयानि सद्गुणैर्मनीषिणां व्याप च कीर्तिभिर्दिशः ।
धनैश्च कोशान् प्रशशास च प्रभूनपि क्षमाया विदितोरुषड्गुणः।।१८०।।
स षट्सहस्र्याधिकजीर्णटङ्कायुतत्रयस्याथ मुदा व्ययेन ।
श्रीधर्मघोषे स्वगुरौ समेतेऽन्यदा प्रवेशोत्सवमाततान ।। १८१ ।।
प्रसेदुषाऽसौ गुरुणाऽर्पितक्रमः क्रमाऽवबुद्धद्रविणव्ययास्पदः ।
अचीकरच्चैत्यचतुष्टयाधिकाशीतिं स्फुरच्छारदवारिदभ्रमाम् ।।१८२।।
अनुत्तरैस्तैः किल चिन्तनातिगैरुदारधीरैश्चरितैरसस्मरत् ।
चिराद् व्यतीतं हरिषेणचक्रिणं स सम्प्रतिं चापि कुमारभूपतिम्।।१८३।।

१ 'षण्मास्या स्वगुरुस्वर्गात्' इति वा पाठः ।

मौक्तिकश्रीसमायुक्तजिननायकमण्डिताः ।
हारा इव विहारास्ते भान्ति भूभामिनीहृदि ॥ १८४ ॥
कोटाकोटिरिति प्रसिद्धमहिमा शान्तेश्च शत्रुञ्जये
श्रीपृथ्वीधरसंज्ञया सुरगिरौ श्रीमण्डपाद्रौ तथा ।
प्रासादा बहवः परेऽपि नगरग्रामादिषु प्रोन्नता-
भ्राजन्ते भुवि तस्य मुक्तिवलभीनिःश्रेणिदण्डा इव ॥ १८५ ॥

अत्र श्रीपृथ्वीधरसाधुकारितप्रासादस्थानसंख्यामूलनायकजिननामादि वाच्यम् , पूज्यगुरुश्रीसोमतिलकसूरिपादैः कृतं स्तोत्रमवतार्य पठनीयम्;

तच्चेदम्—

श्रीपृथ्वीधरसाधुना सुविधिना दीनादिपूद्दानिना
भक्तश्रीजयसिंहभूमिपतिना स्वौचित्यसत्यापिना ।
अर्हद्भक्तिपुषा गुरुक्रमजुषा मिथ्यामनीषामुषा
सच्छीलादिपवित्रितात्मजनुषा प्रायःप्रणश्यद्रुषा ॥ १८६ ॥
नैकाः पौषधशालिकाः सुविपुला निर्मापयित्रा सता
मन्त्रस्तोत्रविदीर्णलिङ्गविवृतश्रीपार्श्वपूजायुजा ।
विद्युन्मालिसुपर्वनिर्मितलसद्देवाधिदेवाह्वय-
ख्यातज्ञाततनूरुहप्रतिकृतिस्फूर्जत्सपर्यासृजा ॥ १८७ ॥
त्रिःकाले जिनराजपूजनविधिं नित्यं द्विरावश्यकं
साधौ धार्मिकमात्रकेऽपि महतीं भक्तिं विरक्तिं भवे ।
तन्वानेन सुपर्वपौषधवता साधर्मिकाणां सदा
वैयावृत्त्यविधायिना विदधता वात्सल्यमुच्चैर्मुदा ॥ १८८ ॥
श्रीमत्सम्प्रतिपार्थिवस्य चरितं श्रीमत्कुमारक्ष्मा-
पालस्याप्यथ वस्तुपालसचिवाधीशस्य पुण्याम्बुधेः ।
स्मारं स्मारमुदारसम्मदसुधासिन्धूर्मिषून्मज्जता
श्रेयःकाननसेचनस्फुरदुरुप्रावृड्भवाम्भोमुचा ॥ १८९ ॥
सम्यङ्न्यायसमर्जितोर्जितधनैः सुस्थानसंस्थापितै-
र्ये ये यत्र गिरौ तथा पुरवरे ग्रामेऽथवा यत्र ये ।

प्रासादा नयनप्रसादजनका निर्मापिताः शर्मदा-
स्तेषु श्रीजिननायकानभिधया सार्द्धं स्तुवे श्रद्धया ॥ १९० ॥
( पञ्चभिः कुलकम् )

श्रीमद्विक्रमतस्त्रयोदशशतेष्वब्देष्वतीतेष्वथो
विशत्याऽभ्यधिकेषु मण्डपगिरौ शत्रुञ्जयभ्रातरि ।
श्रीमानादिजिनः १ शिवाङ्गजजिनः श्रीउज्जयन्तायिते
निम्बस्थूरनगेऽ२थ तत्तलभुवि श्रीपार्श्वनाथः ३ श्रिये ॥ १९१ ॥
जीयादुज्जयिनीपुरे फणिशिराः ४ श्रीविक्रमाख्ये पुरे
श्रीमान्नेमिजिनो ५ जिनौ मुकुटिकापुर्यां च पार्श्वादिमौ ७ ।
मल्लिः शल्यहरोस्तु विन्धनपुरे ८ पार्श्वस्तथाऽऽशापुरे ९
नाभेयो बत ! घोषकीपुरवरे १० शान्तिर्जिनोऽर्यापुरे ११॥१९२॥
श्रीधारानगरेऽथ वर्द्धनपुरे श्रीनेमिनाथः पृथक् १२,१३
श्रीनाभेयजिनोऽथ चन्द्रकपुरीस्थाने १४ स जीरापुरे १५ ।
श्रीपार्श्वो जलपद्र १६ दाहडपुरस्थानद्वये १७ सम्पदं
देयाद्वीरजिनश्च हंसलपुरे १८ मान्धातृमूलेऽजितः १९ ॥ १९३॥
आदीशो धनमातृकाभिधपुरे २० श्रीमङ्गलाख्ये पुरे २१
तुर्यस्तीर्थकरोऽथ चिक्खलपुरे श्रीपार्श्वनाथः श्रिये २२ ।
श्रीवीरो जयसिंहसंज्ञितपुरे २३ नेमिस्तु सिंहानके २४
श्रीवामेयजिनः सलक्षणपुरे २५ पार्श्वस्तथैन्द्रीपुरे २६ ॥ १९४ ॥
शान्त्यै शान्तिजिनोस्तु ताल्हणपुरेऽ२७ रो हस्तनाद्ये पुरे २८
श्रीपार्श्वः करहेटके २९ नलपुरे ३० दुर्गे च नेमीश्वरः ३१ ।
श्रीवीरोऽथ विहारके ३२ स च पुनः श्रीलम्बकर्णीपुरे ३३
खण्डोहे किल कुन्थुनाथ ३४ऋषभः श्रीचित्रकूटाचले ३५॥१९५॥
आद्यः पर्णविहारनामनि पुरे ३६ पार्श्वश्च चन्द्रानके ३७
वङ्कथामादिजिनोऽ३८ थ नीलकपुरे जीयाद् द्वितीयो जिनः३९ ।
आद्यो नागपुरेऽ४० थ मध्यकपुरे श्रीअश्वसेनात्मजः ४१
श्रीदर्भावतिकापुरेऽष्टमजिनो ४२ नागह्रदे श्रीनमिः ४३ ॥१९६॥

श्रीमल्लिर्धवलक्कनामनगरे ४४ श्रीजीर्णदुर्गान्तरे ४५
श्रीसोमेश्वरपत्तने च फणभृल्लक्ष्मा ४६ जिनो नन्दतात् ।
विंशः शङ्खपुरे जिनः ४७ स चरमः सौवर्तके ४८ वामन-
स्थल्यां नेमिजिनः४९शशिप्रभजिनो नासिक्यनाम्न्यां पुरि५०॥१९७॥
श्रीसोपारपुरेऽ५१ थ रूणनगरेऽ५२ थो रुङ्गलेऽ५३थ प्रति-
ष्ठाने पार्श्वजिनः ५४ शिवात्मजजिनः श्रीसेतुबन्धे ५५ श्रिये ।
श्रीवीरो वटपद्र ५६ नागलपुरे ५७ इक्कारिकायां ५८ तथा
श्रीजालन्धर ५९ देवपालपुरयोः ६० श्रीदेवपूर्वे गिरौ ६१ ॥ १९८ ॥
चारूप्ये मृगलाञ्छनो जिनपति ६२ र्नेमिः श्रिये द्रोणते ६३
नेमी रत्नपुरेऽ६४ जितोऽर्बुकपुरे ६५ मल्लिश्च कोरण्टके ६६ ।
पार्श्वो ढोरसमद्रनीवृति ६७ सरस्वत्याह्वये पत्तने
कोटाकोटिजिनेन्द्रमण्डपयुतः ६८ शान्तिश्च शत्रुञ्जये ६९ ॥ १९९ ॥
श्रीतारापुर ७० वर्द्धमानपुरयोः ७१ श्रीनाभिभूसुव्रतौ
नाभेयो वटपद्र ७२ गोगपुरयो ७३ श्चन्द्रप्रभः पिच्छने ७४ ।
ओङ्कारेऽद्भुततोरणं ७५ जिनगृहं मान्धातरि त्रिक्षणं ७६
नेमिर्विक्कननाम्नि ७७ चेलकपुरे श्रीनाभिभू ७८ र्भूतये ॥ २०० ॥

इत्थं पृथ्वीधरेण प्रतिगिरिनगरग्रामसीमं जिनाना-
मुच्चैश्चैत्येषु विष्वग् हिमगिरिशिखरैः स्पर्द्धमानेषु यानि ।
बिम्बानि स्थापितानि क्षितियुवतिशिरःशेखराण्येष वन्दे
तान्यप्यन्यानि यानि त्रिदशनरवरैः कारिताऽकारितानि ॥२०१॥

इति पृथ्वीधरसाधुकारितचैत्यस्तोत्रं १६

काव्यं पूज्यश्रीसोमतिलकसूरिकृतम् ।

नभोगङ्गां रङ्गद्ध्वजसितपतत्रालिकलितां
स्रवच्चन्द्राश्माऽद्भिः स्फटिककलशेन्दुं च विशदः ।
शिरःकोटौ बिभ्रद् मरकतमणीनीलितगलः
श्रयेत् तस्य ज्योत्स्नाहरविलसितं चैत्यनिकरः ॥ २०२ ॥

किं वर्ण्यतेऽसौ मुहुरेकविंशतेर्व्ययाद् घटीनां कनकस्य यो मुदा ।
अचीकरद्धैममयाऽऽदिमप्रभोः शत्रुञ्जये सद्म सुमेरुशृङ्गवत् ॥२०३॥
उदारमाख्यान्त्वऽथवाऽमितम्पचं तदङ्गजं झण्झणदेवमुत्तमाः ।
शत्रुञ्जये रैवतकेऽप्यहो ! ददौ सुवर्णरूप्यध्वजमेकमेव यः ॥ २०४ ॥
केचिदाहुः सुवर्णस्य स षट्पञ्चाशतं घटीः ।
व्ययित्वा लीलयाऽपीन्द्रमालां परिदधौ मुदा ॥ २०५ ॥
दिशां त्रये कूर्मवराहशेषाः पृथ्वीं दधाना बहुकष्टभाजः ।
तस्याश्चतुर्थ्यां दिशि धारकं तं पृथ्वीधरं प्राप्य मुदं दधुस्ते ॥ २०६ ॥
कैवल्यदानप्रतिभूजिनोक्तसमग्रशास्त्राऽवलिलेखनेन ।
अबीभरत् सप्त स सारकोशान् सरस्वतीकेलिगृहानिवोच्चैः ॥ २०७ ॥
श्रीस्तम्भतीर्थे निवसन् प्रभावको वेषं स भीमः प्रजिघाय सङ्घराट् ।
पृथ्वीधरस्याप्युचितं समर्चयन् शीलप्रपत्तौ निखिलान् सधर्मकान्॥२०८॥
युतः सुपत्न्या प्रथमिन्यभिख्यया तथैव साधर्मिकतां विभावयन् ।
द्वात्रिंशवर्षोऽपि भटो जितस्मरः प्रपद्य शीलं तमथो स पर्यधात्॥२०९॥
प्रियापि साऽस्य प्रथमिन्यभिख्या ख्याता सतीषु प्रथमाऽऽत्तरेखा ।
कदापि या क्वाऽपि न पुण्यकृत्यैरहीयताऽस्माद् गुरुदेवभक्ता ॥२१०॥
नित्यं त्रिर्जिनपूजनं गुरुनतिः साधर्मिकाऽभ्यर्चनं
दीनाद्युद्धरणं सुशास्त्रपठनं पर्वस्वथो पौषधः ।
कृत्यानीति गुरूपदेशवशगः स द्विःप्रतिक्रान्तिकृन्
भूपालार्पितमालवाऽवनमहाचिन्तोऽप्यहो ! निर्ममे ॥ २११ ॥
अनुत्तरोदारसमग्रसद्गुणः स षड्विधावश्यकतत्परः सदा ।
नृरत्नमर्हद्गुरुभक्तिभाग् मतप्रभावकोऽलङ्करणं भुवोऽभवत् ॥ २१२ ॥
प्रबोधकोऽथास्य गुरुः स चाऽन्यदा दुष्टाङ्गनाभिर्वटकान् सकार्मणान् ।
विहारितान् साधुजनैरतत्यजन् प्रगे शिलाखण्डमयाश्च तेऽभवन्॥२१३॥
ततोऽभिमन्त्र्यार्पितपट्टकासनास्ताः स्तम्भयित्वा दययाऽमुचन्नताः ।
तथैव विद्यापुरकेशगुल्मकृन् स्त्रियोऽथ सङ्घार्थनया मुमोच सः॥२१४॥

---

१ 'शतं घटार्व्ययित्वा' इति च । २ 'हैमयमादिमप्रभोः' इत्यपि पाठः ।

क्वचित् पुरे द्वार्निशि शाकिनीभियाऽभिमन्त्र्य दीयेत ततोऽस्मृतेऽन्यदा।
गुरुस्तदुत्पाटितपट्टिवीक्षणे संस्तभ्य वाचा वशिता मुमोच ताः॥२१५॥
श्रीशारदालब्धवरो निशैकयाऽष्टभिः स कृत्वा यमकैरलङ्कृताः।
स्तुतीर्जिनानां क्षमदज्वरौषधीरबूबुधद् गुर्जरराजमन्त्रिणम् ॥ २१६ ॥
सोमेशपत्तनगतः स्मरणानुभावान् सोऽध्यक्षतागमितजीर्णकपर्दिराजम्।
मिथ्यात्वतो भवगमी चिरमेष मा भूरेवं प्रबोध्य विदधे श्रितजैनबिम्बम्२१७
शिष्यार्थनाविहितमन्त्रनुतिप्रभावाद्रत्नाकरोऽप्यकृत मण्युपदां तरङ्गैः।
स्थानेऽस्य तत्तदतिथेः पुरुषोत्तमस्य गम्भीरताभिभवनाद् लुठतः पदाग्रे२१८

अथ च–

वल्गद्वेतालमालाविदलनकुशलः सिद्धझोटीङ्गवृन्द–
स्तन्त्रैर्मन्त्रैरमात्रैः समजनि विकटैश्चेटकैश्चोत्कटो यः।
आकर्षोच्चाटवश्यादिभिरपि स तदा शक्तिभिः कोऽपि योगी,
कम्प्रीकुर्यात त्रिलोकीं गिरिमपि चलयेच्छोषयेद्वारिधिं वा ॥२१९॥
निषिद्धसाधुस्थितिकोज्जयिन्यां श्वमूषकौत्वादिविकुर्वणाद्यैः।
तं भाययन्तं स्वमुनीन् निबध्य प्रपीड्य मन्त्रैरमुचत स नम्रम्॥२२०॥

(युग्मम्)

संक्षेपोऽयम् ; व्यासावदातस्त्वेवम्–

वल्गद्वेतालमालाविदलनकुशलः सिद्धझोण्टीङ्गवृन्द–
स्तन्त्रैर्मन्त्रैरमात्रैः समजनि विकटैश्चेटकैश्चोत्कटोऽथ।
योगी कोऽप्युज्जयिन्यां नृपसचिवमुखैः पूजितः सर्वलोकै-
र्नानाशिष्यैः परीतोऽदधदणिमवशित्वेशताद्याश्च शक्तीः ॥२२१॥
स्वर्णाद्रिं शिरसा भिनद्मि निखिलानाकर्षयामि ग्रहान्
फूत्कृत्या दिवमुत्क्षिपामि च गिरीन् संशोषयाम्यम्बुधीन्।
त्रैलोक्यं स्ववशीकरोमि विदधे स्वर्भूर्भुवो व्यत्ययं
देवेन्द्रैः सह लोठयामि पदयोर्ब्रह्मेशनारायणान् ॥ २२२ ॥
भो भो दर्शनिनः ! समस्ति पटुता कस्यापि चेत्तन्मया
सार्धं वादरणं करोत्वभिमतं कृत्वा पणं सोऽधुना।

नोचेत्त्यक्तमदा मदीयमखिलाः सेवध्वमङ्घ्रिद्वयं
दूरं यात पलाय्य वाऽपि सकलान् नोचेद्गिलाम्येष वः ॥२२३॥
इति प्रतिज्ञां प्रवदन् मदात्तदा जगत्त्रयेऽप्यप्रतिमल्लतां विदन् ।
वित्रासिताऽन्याऽखिलदर्शनिव्रजो नैवोज्जयिन्यां स ससाह संयतान्॥२२४॥
श्रीधर्मघोषः प्रभुरन्यदाऽगमत् स तत्र धात्र्यां विहरन् महर्षियुक् ।
अमुष्य शिष्यांश्च स वीक्ष्य वर्त्मनि क्रुधा कुधीर्दष्टरदच्छदोऽवदत्॥२२५॥
इहागताः किं नु पुरे सिताम्बराः ! विहाय मूढाः ! विपुलं धरातलम् ।
मुमूर्षुगोधा नु निषादपाटकं न वीक्षितश्चेत्तदहं श्रुतोऽपि न ॥ २२६ ॥
पलाय्य तद्गच्छत मर्षयाम्यहं स रङ्ककाणामपराधमेककम् ।
भ्रूक्षेपमात्रादपि कम्पितामरोऽन्यथा पतङ्गिष्यथ मे रुषानले ॥ २२७ ॥
जगुर्मुनीन्द्राः प्रभवन्ति दुर्मते ! सर्वज्ञपुत्रेषु न ते बिभीषिकाः ।
मृगेषु सिंहस्य यथा हि विक्रमः स्फुरेत् तथा नो शरभार्भकेष्वपि ॥२२८॥
न योगिराजाऽन्यकुदर्शनिव्रजैः समानतां बिभ्रति सूनवोऽर्हतः ।
करैरपि ध्वान्तरिपोर्विलुप्यते न तारकाणामुदितैः किमु प्रभा ?॥२२९॥
प्रभुः किमद्यापि न नः श्रुतो जयी गुरुर्भवद्दर्पतमोदिवाकरः ।
यमेव विद्या निखिलाः समं श्रिताः सरित्पतिं सिन्धुगणा इवाधुना॥२३०॥
गतं गजेन्द्रस्य यथा न जम्बुकैर्नवा मृगैः शौर्यविजृम्भितं हरेः ।
नभःप्लुतिं नो मशकैर्गरुत्मतो रवेर्न खद्योतकरैर्युतां भरम् ॥ २३१ ॥
नगैर्न गाङ्गेयगिरेर्यथोच्चतां जलाशयैर्नो जलधेरगाधताम् ।
द्रुमैः प्रभावं नच कल्पशाखिनो न दुर्गतैः श्रीस्फुरितं च चक्रिणः॥२३२॥

यथा न भूतैर्ललितं सुरेशितु-
न तीर्थिकैस्तीर्थकृतोऽर्थदेशनाम् ।
समग्रविद्याविदुरैर्न नो गुरो-
स्तथाऽनुकर्तुं चरितं प्रगल्भ्यते ॥ २३३ ॥
ततो मुधा गर्जसि गर्वपर्वतो
मन्यामहे त्वां न तृणाय दुर्मते ! ।
अस्मद्गुरोर्मन्त्रसमीरणोद्धुतो

न तूलकल्पः स्थिरतां प्रधास्यसि ॥ २३४ ॥
मृगस्य सिंहस्तमसश्च भानुमा-
नसिर्मृणालस्य तृणस्य चाऽनलः ।
अहेर्गरुत्मानिव लीलयाऽप्यलं
तवाऽपहर्तुं मदजीवितं गुरुः ॥ २३५ ॥
निशम्य योगीति रुषा स लब्ध्या
जान्वायतस्थूलरदास्यभीष्मम् ।
विधाय रूपं विकृतं जिघत्सु-
रिवाभ्यधावत् चलयन् भुवं तान् ॥ २३६ ॥
मुमुक्षवस्तद्रदपातसूचिर्नीं
कफोणिमुद्भूय पलाय्य च द्रुतम् ।
सकम्पगात्रास्तरलेक्षणा भया-
द्गुरुं वसत्यां शरणं प्रपेदिरे ॥ २३७ ॥
मा भैष्ट मा भैष्ट कुतो नु वो भयं
मयि प्रभौ त्रातरि हे विनेयकाः ! ।
इतीरिताः श्रीगुरुणाथ संभ्रमा-
दाश्वस्य वृत्तं मुनयोऽपि तद् जगुः ॥ २३८ ॥
यावन् तदाकर्ण्य करोति रोषतो
भ्रुवं ललाटप्रणयोद्धुतां गुरुः ।
तावन् प्रदोषे विचकार दूरगोऽ-
प्यहो ! स योगीह विभीषिका इमाः ॥ २३९ ॥
तथाहि-
स्फारैः स्फूत्कारवारैर्भरितसुरपथा भूमिपीठे समन्ता-
द्भीष्मा भोगीन्द्रभाराः फणमणिकिरणैर्द्योतिताशाः प्रसस्रुः ।
शालान्तः पुस्तकाद्योपकरणवलकस्तम्भमुख्याऽखिलार्थान्
खादन्तो वज्रतुण्डा भयदपृथुवपुर्मूषकाश्चोपरिष्टात् ॥ २४० ॥
फेत्कारान् स्फोरयन्तो बहिरथ वसतेश्चण्डफेरण्डसङ्घा-

चल्लान्मार्जारवाराः पृथुरदवदना मण्डलाश्चाप्यसङ्ख्याः ।
दृष्ट्वा तान् भीभरेणोत्तरलितनयनाः कम्प्रगात्रा न नंष्टुं
स्थातुं वाऽशक्नुवन्तो निजगुरुमवदन् पाहि पाहीति शिष्याः ॥२४१॥
त्राताऽयं वोऽस्मि विश्वप्रकटमहिमभृद् मैष्ट मा मैष्ट मा भोः !
आश्वास्यैवं विनेयान् गुरुरपि विगतक्षोभशङ्कः सदापि ।
यावद् ध्यानावलम्बी जपति जयकरं सिद्धमन्त्रं स तावत्
सर्पाद्याः क्वापि जग्मुः प्रमुदितमनसः साधवश्चाप्यभूवन् ॥२४२॥
योगी सोऽप्युग्रबन्धैरविषयिविषयैर्हा ! म्रिये रे ! म्रिये रे !
शिष्याः ! बद्धाऽखिलाङ्गः कुरुत कुरुत भोः ! कांश्चनाऽऽशूपचारान्।
आस्तावद् यत्नसिद्धा अपि हि विफलतां भेजिरे चेटकाद्याः
सर्वे मन्त्राश्च दैवं धिगहह ! किमभूद् धीरियं मेऽधुनाऽघैः ॥२४३॥
क्रन्दन्नित्युग्रकष्टः सकलपुरजनैर्दृश्यमानो विमानो
धावद्भिर्व्याकुलैः स्वैर्निखिलपरिजनैश्चापि हाहारवाढ्यैः ।
आकृष्टो जैनमन्त्रैः स्मृतिमपि गमितैश्चेटकाद्यैरशक्य-
स्त्रातुं व्योम्ना समागाद् गुरुपदकमलोपान्तमानम्रमौलिः ॥२४४॥
उवाच योगी भगवन् ! दयानिधेऽपराधमेकं मम मर्षयाऽधुना ।
विमुञ्च मामेष पतामि पादयोर्न वो विरुद्धं विदधे ह्यतः परम् ॥२४५॥
जगुर्जनाश्चापि न धर्तुमर्हसि प्रभो ! प्रकोपं प्रणते दयास्पदे ।
व्यधादथ स्वक्रमरेणुना गुरुः शमी स्वभावस्थमिमं लसद्दयः ॥२४६॥
त्वं शङ्करः सर्वजनेष्टकर्ता ब्रह्मा त्वमेवाखिलब्रह्मनिष्ठः ।
त्वमेव सत्यं पुरुषोत्तमोऽसि त्वमेव बुद्धः सकलार्थवेदिन् ! ॥२४७॥

अबुद्धतत्त्वस्य मुधाऽभिमानिनो
ममाऽसि बुद्धः सुचिराद् जगद्गुरुः ।
त्वदीयपादाऽब्जरजोऽणुनाऽपि चेत्
तुलां लभे तर्हि भजे कृतार्थताम् ॥ २४८ ॥

समग्रविद्याविभवात्मकस्य ते
पुरोऽणवत्येष सुसिद्धिभागपि ।

बिभर्ति यस्माल्लघिमानमुच्चकैः
   पुरः सुमेरोर्निखिलोऽपि भूधरः ॥ २४९ ॥
इति स्वनिन्दामुखरः सविस्मयः
   सुभक्तिभाक् सर्वजनस्य पश्यतः ।
स्तुवन् मुदाऽऽनम्य गुरुं सहानुगै-
   र्जगाम विद्वान् स्वपदं स योगिराट् ॥ २५० ॥
अहो ! जयत्याऽऽर्हतशासनं प्रभु-
   र्गुरुः स यस्येदृशशक्तिमानयम् ।
इति स्तुवन्तोऽपि जना यथागतं
   गता व्यहार्षीद् गुरुरप्यथाऽन्यतः ॥ २५१ ॥
दष्टोऽन्यदाऽथ स गुरुः फणिना विषेण
   मूर्छन्नुपायविधुरं निशि सङ्घमूचे ।
प्रातः समेष्यति लता विषहृत् प्रतोल्यां
   पुंमौलिकाष्ठभरबन्धनकृद् विशुद्धा ॥ २५२ ॥
देयास्तु दंशवदने मम तां प्रघृष्ये-
   त्येवं च तेन विहिते पटिमानमाप्तः ।
संत्यक्तसर्वविकृतिर्भगवांस्तदादि
   चक्रे जिनप्रवचनोन्नतिमुग्रतेजाः ॥ २५३ ॥
तत्कीर्त्या धवलाद्वयेऽपि भुवने त्रैधे कृते शङ्करे
   दुर्लक्ष्ये विहिते हिमाद्रितनयाचेतस्तदाऽतूतुपत् ।
नो गाङ्गं सलिलं विधुर्न न वृषो नैवापि चक्षुःश्रवः
   स्वामी किन्तु गरो विनीलितगलाङ्काविर्भवद्भर्तृकः ॥२५४॥
*चित्राणि सिद्धान्तपथानुगानि*
   स्तोत्राणि सङ्घाचरणं च शास्त्रम् ।
इत्याद्यनर्घ्याकृतिरस्य कस्या-
   ज्ञानज्वरच्छेदमहौषधी न ॥ २५५ ॥
यः स्वर्गमापत् तुरगेषुविश्व-

मितेऽ१३५७ब्दके विक्रमतः क्षितीन्द्रात् ।
श्रीधर्मघोषः कृतपुण्यपोषः
स रातु सङ्घाय विभुः सुखानि ॥ २५६ ॥
तदीयपट्टाम्बरभासनोद्यतः
सोमप्रभः सूरिवरो ४८ बभूव सः ।
यो दीयमानां गुरुणाऽपि नाग्रही-
श्चारित्रशुद्ध्यै किल मन्त्रपुस्तिकाम् ॥ २५७ ॥
ये मोदन्ते कृपणमतयः क्लेशभाजो धनाद्यैः
शास्त्रैर्वादिद्विपमदहरैश्चाप्यधीतैः कियद्भिः ।
प्राप्ताभिर्वा लघिमवशिताकर्षमुख्यर्द्धिभिर्ये
सर्वे साम्याऽमृतरसभुजस्तेऽनुकम्प्या हि तस्य ॥ २५८ ॥
भास्वान् सच्चरणश्रिया विशदया विश्वोत्तरप्रोल्लस-
च्चातुर्वैद्यरमाविलासनिलयः श्रीचित्रकूटाचले ।
कृत्वाऽऽशु द्विजराजमण्डलमसौ छन्नप्रभं गोभरैः[1]
सर्पद्दर्पमजीजनद् जिनमतानन्तप्रकाशोदयम् ॥ २५९ ॥
तथाहि—
शर्वशैलशिखरोपरिस्फुरच्चन्द्रमौलिमुकुटेन्दुरश्मिभिः ।
पूरिते सरसि मानसेऽभितः कैरवाणि विकसन्ति वासरे ॥२६०॥
विना विचारस्खलनेन शीघ्रमेतत्समस्यापदपूरणेन ।
साहित्यवादे विजितद्विजौघः श्रीचित्रकूटे शमबोधयत् सः ॥२६१॥
सर्वाङ्गपाठी निखिलागमार्थान् विनापि वृत्त्यादि हि सोऽययादत् ।
केऽप्यन्यके नैपुणधारिणोऽपि विद्यासु सर्वास्वपि नाततादत्॥२६२॥
श्रुतातिशायी पुरि भीमपल्ल्यां वर्षासु चाद्येऽपि हि कार्तिकेऽऽसौ ।
अगात् प्रतिक्रम्य विबुद्ध्य भावि भङ्गं परैकादशसूर्यबुद्धम् ॥२६३॥
भक्तेष्वपि श्रावकपुङ्गवेषु
ममत्वमुक् केवलसंयमार्थी ।

---

१ 'द्विजमण्डलं गुरुमतैः' इत्यपि पाठः ।

शुद्धाम्ब्वलाभाम्बुविराधनाभ्यां
सोऽमूमुचत् स्वैमरुकुङ्कुणेर्याम् ॥ २६४ ॥
यतिजीतकल्पयत्राखिलादिजैनेन्द्रसंस्तुतिप्रमुखा ।
विपुलमतेस्तस्य कृतिर्हरते हृदयानि विबुधानाम् ॥ २६५ ॥
दिग्विश्ववर्षे १३१० जननं कृपाणि-
विश्वे १३२१ व्रतं प्राप्य रदत्रिचन्द्रे १३३२ ।
पदप्रतिष्ठां च गुरुर्जगाम
त्रिसप्तविश्वे १३७३ च स देवधाम ॥ २६६ ॥
ददात्वसौ मञ्जुलमङ्गलाली
जगत्पवित्रीकरणाभिधान. ।
श्रुतासु यद्धर्म्यकथास्वपीह
भवेत् सतां साम्यरसानुभूतिः ॥ २६७ ॥
चत्वारस्तस्य गुरोः शिष्याः ख्यातेः पदं च सकलदिक्षु ।
आसन् जिनपतिशासनसौधोद्धाराय तु स्तम्भाः ॥ २६८ ॥
श्रीमानिहाऽऽद्यो विमलप्रभोऽभवत्
प्रबोधलब्ध्योद्धृतवान् दयाम्बुधिः ।
स्वदेशनावाणिगणान् वितत्य यो
मिथ्यात्वकूपाद् गृहिणां शतत्रयम् ॥ २६९ ॥
श्रीमत्परमानन्दः परमानन्दप्रदः स्वमूर्त्यापि ।
गुरुरद्वितीयभाग्यो जज्ञे शिष्यो द्वितीयस्तु ॥ २७० ॥
आसीत् सुविहितमुकुटः स्फुटसंयमशुद्धिरिद्धगुणजलधिः ।
श्रीपद्मतिलकसूरिस्तार्तीयीकस्तु तच्छिष्यः ॥ २७१ ॥
श्रीसोमतिलकनामा ४९ सूरिर्विश्वोत्तमश्च तुर्योऽभूत् ।
महिमाम्बुधौ यदीये लीनास्त्रिजगन्मनोमीनाः ॥ २७२ ॥
स बाणबाणत्रिकुवर्ष १३५५ माघे
जातः पदाभ्यामनुकूलखेटैः ।
नन्दाङ्कविश्वे १३६९ व्रतमाप्य भेजे

वहन्त्यश्वविश्वे १३७३ ऽपि पदप्रतिष्ठाम् ॥ २७३ ॥

सूरीन्द्रसोमप्रभपट्टभास्करो
बालोऽप्यसौ प्राप्तपदप्रभोदयः।
क्ष्माभृतां मौलिनिघृष्टपादभृद्
विदिद्युते स्फारयशःप्रतापवान् ॥ २७४ ॥

अयं निजैः सूरिगुणैरनुत्तरैः
सूरिर्न कैरप्युपमामशिश्रियत्।
येनोपमीयेत सरोऽम्बुराशिना
न चाम्बुराशिः सरसाम्बुऋद्धिभिः ॥ २७५ ॥

अल्पायुष्ट्वात् सूरित्रितयस्यैकोऽप्यसावपाद् गच्छम्।
रक्ष्यत्येकोऽपि वनं सिंहो न तु लक्षशोऽपि मृगाः ॥ २७६ ॥

न कैर्गजः सङ्घपतिः प्रशस्यते
स जङ्गरालव्यवहारिमण्डनः।
यष्टङ्कसार्द्धायुतयामल २५००० व्यया-
दचीकरत् तत्पदमद्भुतोत्सवैः ॥ २७७ ॥

क्षोणीभूषणजङ्गरालनगरालङ्कारवीरालये
प्राप्ताचार्यपदस्य तस्य सुमहाभाग्यस्य दृष्ट्वाप्यहो !।
भूतप्रेतकुशाकिनीच्छलरिपूच्चाटस्फुरत्कार्मणा-
द्युत्थोपद्रवमण्डलानि निखिलान्याशु प्रणेशुर्नृणाम् ॥ २७८ ॥

नो दुष्टाः पशवः स्वभावरिपवः प्राबोभुवुर्नो खला-
स्तस्योत्कृष्टयशःप्रतापसुगुणा व्यापुश्च सर्वा दिशः।
तत्तन्निर्जितका इवापरमहासूरीश्वराणां च ते
दूरं क्वापि पलायिता बुबुधिरे कैश्चिद् यथा नो पुनः ॥ २७९ ॥

षट्तर्कीपरितर्ककर्कशमतिप्रोत्सर्पिदर्पोत्कर-
स्फूर्जद्दुर्दमवादिसंमदमदापस्मारविस्मारके।
एतस्मिन्नवति प्रभौ जिनमतं तद्द्वेषिणः क्वाप्यगु-
श्छिन्नोत्साहमतिप्रभावरुचयः कष्टं जिजीवुः परम् ॥ २८० ॥

विश्वव्यापिनि तस्य विश्रुतयशःपद्माकरे सर्वतः
　कम्पाङ्कोत्पतदम्बुशीकरतुलारूढोडुमालाचितम् ।
नीलाम्भोजति तावदम्बरतलं स्फोष्टाष्टकाष्ठादलं
　सूर्याचन्द्रमसौ मरालतुलनादोलामथारोहतः ॥ २८१ ॥
तस्याखिलश्वेतपटाधिपस्य शक्नोति कः श्वेतपटान् प्रमातुम् ।
एको यशःश्वेतपटो यदस्य दिगङ्गनाङ्गाऽऽवरणं विधत्ते ॥ २८२॥

किं बहुना—

ध्वस्ता वादिमदा हतः कलिमलो मिथ्यात्वमुग्रं तम-
श्छिन्नं मण्डलमण्डलप्रसृमरं प्राप्तं नृपेभ्योऽर्चनम् ।
क्लृप्ता शासनभा युगोत्तमगुणैराऽऽप्ता तुला गौतमा-
त्युद्यल्लब्धिगुणप्रभावचरितैः सूरिः समोऽन्योऽस्य न ॥ २८३ ॥
वृद्धक्षेत्रसमाससप्ततिशतस्थानादिशास्त्रैर्नवैः
　पात्रैराऽऽगमवारिधेरतिगुरोः पूर्णैः स्वधीगाहितात् ।
उद्धृत्यार्थसुधारसान् सुमनसः संसारतापापहान्
　सोऽपीप्यत् पुरुषोत्तमः स्वतिशयप्रौढिश्रिया संश्रितः ॥ २८४ ॥
शिष्यांस्त्रीन् समताऽस्थपद् निजपदे प्राज्ञान् स तेष्वादिमः
　ख्यातः श्रीगुरुचन्द्रशेखर इति त्रैवैद्यवारांनिधिः ।
प्रौर्णोनोत् किल चन्द्रशेखरमहो ! नाम्नाऽपि पास्पर्द्धतं
　योऽसोढा भुवने स्वकीर्तिपटलैर्निर्माय शौक्ल्याद्वयम् ॥२८५॥
अभिमन्त्रितरजसाऽपि हि गृहहरिकादुर्द्धरश्च मृगराजः ।
दूरं नेशुर्यस्मात् सपरिकाराद् महिमवारिनिधेः ॥ २८६ ॥
न धीरं गोक्षीरं न मधु मधुरं किं तु विधुरं
　मनः साक्षाद् द्राक्षा न हरति सुधा साऽपि हि मुधा ।
न सान्द्रा वा चान्द्रा न वमरुचयः साधुशुचयः
　श्रुता चेद् यद्वाणी भवरिपुकृपाणी नवरसा ॥ २८७ ॥
वासिकभोज्यकथानकशत्रुञ्जयरैवतस्तुतिप्रमुखा ।
चित्राकृतिर्यदीया कविकुलमोदप्रदा जयति ॥ २८८ ॥

अग्न्यश्ववह्नीन्दुमिताब्दजातः १३७३
शरेभविश्वे १३८५ यमितामवाप्य ।
द्विनन्दविश्वे १३९२ च पदप्रतिष्ठां
त्रिदोर्मनुष्वा १४२३ प च यः सुरौकः ॥ २८९ ॥
शिष्याध्यापनकौशलं निपुणता सा सार्ववैद्ये गिरां
माधुर्यं प्रशमादयो जनहितं चारित्रमप्युज्ज्वलम् ।
विश्वाप्यायकदेशनातिसुषमा चैवं परो विश्रुतै-
र्यस्याऽभूत् सदृशो गुणैर्न स गुरुः सङ्घाय देयात् सुखम् ॥२९०॥
श्रीसोमतिलकसूरिस्तस्य गुरुस्तदनु चैकवर्षेण ।
जिनभुवने १४२४ स्वर्गमितस्तनोतु सङ्घाय कल्याणम् ॥ २९१ ॥
तस्य स्वर्गतिसमये सुरकृतखोद्योतनादिमहिमानम् ।
वीक्ष्य जनाः प्रोचुरहो ! विमानमागाद् गुरोरस्य ॥ २९२ ॥
पात्रावर्तीर्णदेवी जगौ सुरेभ्यः श्रुतं मया मेरौ ।
सौधर्मेन्द्रसमाना जज्ञुरिमे श्रीतपाचार्याः ॥ २९३ ॥
शिष्यो द्वितीयस्त्वभवत् तदीयः
श्रीमान् जयानन्दगुरुः स योऽभूत् ।
कलिद्विषः क्लृप्तजयाद् विधायाऽऽ-
नन्दं सतां सार्थकनामधेयः ॥ २९४ ॥
जातोऽन्तरिक्षद्विपविश्ववत्सरे १३८०
द्विनन्दवह्नीन्दुषु १३९२ योऽभवद् व्रती ।
स्नेहाद् निषेधप्रवणेऽग्रजन्मनि
प्रबोधिते देवतया प्रभावकः ॥ २९५ ॥
पदं श्रितः सोत्तरसूरिरभ्रदो-
र्मनुष्व १४२० मेयातिशयश्रियां निधिः ।
चकार रम्यं शकटालजन्मनो
वृत्तं गमी द्यां कुयुगाब्धिगोषु १४४१ यः ॥२९६॥
यद्देशनाशैवलिनीनिलीनाः

प्रौज्झन् द्विजौघा अपि कल्कपङ्कम् ।
तदेकलीना जनचित्तमीना-
स्तथा परोद्यद्बकवृत्तिभीतिम् ॥ २९७ ॥
यदीयविद्याविभवादकोविदं
शेषं स्म सर्वं प्रतिभाति विष्टपम् ।
दधाति यद्दुर्विधता विधिं पुरो
महेन्द्रभूतेः सनरामरं जगत् ॥ २९८ ॥
युगोत्तमाभो जगदुत्तरो गुणै-
र्यो भारतीभारतसंयमश्रियोः ।
आधारभूतः समभूत् प्रभावभू-
स्तनोतु सङ्घस्य स सातसन्ततिम् ॥ २९९ ॥
श्रीदेवसुन्दरयुगोत्तमसूरिराजाः ५०
शिष्या जगत्त्रयदृशो जयिनस्तृतीयाः ।
यैर्भास्वरैः स गणराट् पुरुषोत्तमोऽपि
भूल्येशतामभृत सोमललामसूरिः ॥ ३०० ॥
षण्णवाग्निविधुवत्सर १३९६ जाताः
प्राव्रजन् जलधिखाब्धिमहीषु १४०४ ।
ये महेश्वरपुरे नखरत्ने १४२०
पत्तने च पदसम्पदमापुः ॥ ३०१ ॥
येषां जगद्विस्मयमोदकारिणं
गजर्द्धिऋद्धो विदधे पदोत्सवम् ।
सौवर्णिकः सङ्घपतिर्नृपप्रभः
सिंहोऽर्हतो ज्ञानमहं नु वासवः ॥ ३०२ ॥

अथ तेषामवदातैतिह्यप्रकटनं किञ्चित् क्रमात्-

बाल्येऽपि येषां किलमश्विकाजुषां सुलक्षणैः लक्षणवेदिनः पदौ ।
समीक्ष्य केचिद् विबुधा जगुः परां चिरं भवित्रीं महनीयतां भुवः ॥३०३॥
कोटीनाराह्वपुरे गणभृच्छ्रीसोमतिलकसूरीणाम् ।

गणभारोद्धरणपटुं पात्रं जिज्ञासमानानाम् ॥ ३०४ ॥
सुध्यानलीनमनसां विशदगुणैर्भाविनो युगवराभाः ।
क्षुल्लत्वेऽपि च कथिता येऽम्बिकयाऽनन्तभाग्ययुजः ॥ ३०५ ॥
(युग्मम्)

अभूत् त्रिशत्या वरयोगिनां वृतो-
ऽन्यदोदयीपाभिधयोगिनायकः ।
कृतस्थितिः पत्तनगुङ्गडीसर-
स्यनेकमन्त्रादिसमृद्धिमन्दिरम् ॥ ३०६ ॥
हरन् गरान् स्थावरजङ्गमानय
जलानलव्यालहरीभभीहरः ।
अनागतातीतविदद्भुतास्पदं
नृपेभ्यमन्त्र्याद्यखिलप्रजार्चितः ॥ ३०७ ॥
निरीक्ष्य दूरादपि यानरियुतो मुदाऽऽशु दण्डव्रतकृत् सहानुगैः ।
अवन्दत व्यञ्जितभक्तिडम्बरः प्रजासमक्षं बहुधा स्तुवन् गुरून् ॥३०८॥
सङ्घाधिपनरियाद्यैः पृष्टो नमनादिहेतुमाख्यच्च ।
गुरुरादिदेश दिव्यज्ञानर्द्धिः कणयरीपा माम् ॥ ३०९ ॥
पद्माक्षदण्डपरिकरचिह्नैरुपलक्ष्य सूरयो वन्द्याः ।
भवता युगप्रधानाः शिवदा इत्यादि तद् व्यनमम् ॥ ३१० ॥
धाराभिधश्रावकपुङ्गवेन पक्षोपवासैर्वशितः सुपर्वा ।
प्रपृच्छ्य सीमन्धरसार्वमाख्यत् त्रिभिर्भवैर्मुक्तिपदं हि येषाम् ॥३११॥
सारङ्गमन्त्री वटपद्रवासभाग्
द्विषन् जिनोक्तीरपि पूर्वजक्रमात् ।
निबुध्य देवस्य गिरा युगोत्तमा-
नभिग्रहात् सिद्धपुरेऽभिगम्य यान् ॥ ३१२ ॥
वेदादिशास्त्रैः कृतनैकनोदनः
सप्रत्ययैर्यद्वचनामृतैर्मुदा ।
विधूय मिथ्यात्वगरं नतिस्तुतीः

सृजन् प्रबुद्धो जिनधर्ममग्रहीत् ॥ ३१३ ॥
महाधनः श्राद्धवरः प्रभावकः
सुदर्शनाणुव्रतभृत् सुशास्त्रवित् ।
दिने चतुष्प्रासुकद्रव्यभोजन-
व्रतोऽस्ति नानाऽद्भुतपुण्यकर्मठः ॥ ३१४ ॥
गुणर्द्धिसंवादिसुपर्वभाषितै-
रपीति तेष्वेव युगप्रधानताम् ।
निश्चित्य युक्तं गुरुधीनिवेशनं
शिवाय विज्ञैरधुना प्ररूप्यते ॥ ३१५ ॥
देवानां खलु सुन्दरो गुरुरिमामास्थाय नव्यां तनूं
दृष्ट्वा शासनमर्दितं कुकलिना तच्चिन्तकेन्द्रार्थितः ।
अर्हद्भक्ततयाऽत्र तत्सुखयितुं गच्छेऽवतीर्णस्तपा-
संज्ञे तत् किल देवसुन्दरगुरुष्वाह्वाऽपि तेष्वित्यसौ ॥ ३१६ ॥
विद्याभरोऽसंख्यमुनीन्द्रवृन्दै-
र्निपीयमानोऽपि हि वर्धमानः ।
कथं तुलां यातु पयोधिनैषां
निःशेषमेकोऽपि पपौ मुनिर्यम् ॥ ३१७ ॥
तेषां त्रैवैद्यपाथोधेरूर्म्युल्लासितशीकरान् ।
पिबन्ति गुरुशुक्रज्ञास्तन् किलैतेऽपि पण्डिताः ॥ ३१८ ॥
सर्वतः प्रसरभाञ्जि यशांसि
क्षीरनीरनिधयन्ति यमीशाम् ।
तानि तत्र परसूरिततीनां
शीकरावलिरिवाथ विभान्ति ॥ ३१९ ॥
तेषां परेषामथ सूरिराजां
चिकीर्षता विश्वकृता यशांसि ।
उन्मानबीजानि विचक्रिरे प्राक्

१ 'सद्यौवनेऽप्येकसुतोऽपि शीलवान्' इत्यपि पाठः ।

पूर्णेन्दुबिम्बं किल तारकाश्च ॥ ३२० ॥
उत्कल्लोलैर्द्विरदरदनच्छेदकुन्दावदातैः
शुक्लाद्वैतं त्रिजगति गमिते तैर्यशोभिः प्रपूर्य ।
अन्येषां चेद् वरिवृतति तदा तल्लवा नैव लभ्याः
सत्ता यस्माद् विरमति सरितां सिन्धुना संगतानाम् ॥३२१॥
कोऽवेदयिष्यत् तुलनामतीतान्
श्रीगौतमादीन् गणिनो व्यतीतान् ।
युगोत्तमास्ते यदि नाभविष्यन्
निदर्शयन्तः स्वगुणश्रिया तान् ॥ ३२२ ॥
वीरेण ये शासनधारका महा-
चार्याः स्वनिर्वाणपदादनूदिताः ।
एतेऽवगम्याः खलु ते गुणोच्चै-
राज्ञैतदीयैव शिवाय तज्ज्ञैः ॥ ३२३ ॥
नालं यस्याहिनेता हरगिरिरमलः कर्णिकाबन्धबन्धु-
र्माद्यद्दिग्दन्तिदन्ता दलततिरतुला पूर्णचन्द्रश्च कोशः ।
ज्योत्स्नापूरः परागः सितकरकिरणाः केसरालीव भान्ति
स्फीतं तत् तद्यशोऽब्जं त्रिभुवनसरसि व्योमभृङ्गानुषङ्गि ॥३२४॥
न विद्यया नैव तपोभिरग्रिमै-
र्न वा महिम्ना न च भाग्यसंपदा ।
गुणर्द्धिभिर्वाऽप्यधिकः समोऽथवा
न कोऽपि तेषामधुनेह वीक्ष्यते ॥ ३२५ ॥
तदीयपट्टे गुरवो जयन्ति ये
ये चाऽऽपुरिन्द्रातिथितां विधेर्वशात् ।
तन्नामसंकीर्तनपुण्यवारिभि-
र्गिरं पवित्रां विदधेऽधुना मुदा ॥ ३२६ ॥
श्रीज्ञानसागरगुरुप्रभवो ५१ बभूवु-
राद्या यदीक्षकबुधा इति चिन्तयन्ति ।

मुक्तोऽपि गौतमगुरुः समवातरत् स्वं
वीक्ष्यान्वयं सुगतवत् किल दुःस्थमेषः ॥ ३२७ ॥
अन्तःसाम्यसुधाह्रदप्रसृमराः किं प्रोच्चवीचीचया
हेलापीतजिनागमाम्बुधिभुवः प्रोद्गारमालाः किमु ? ।
किंवा वक्त्रसुधाभृतेर्युतिभराः पीयूषदिग्धाः सता-
मेवं स्मोदयते विकल्पनिकरो यद्देशनागीर्व्वहो ! ॥ ३२८ ॥
संमील्याऽखिलसाम्यकाम्यकणकान् विश्वस्य किं योगिनां
सारान् कांश्चन वा निचित्य जगतां पीयूषवीचीकणान् ।
सर्वद्वीपसुधांशुमण्डलमिलत्सौम्यत्वलक्ष्मीलवान्
किंवाऽऽदाय विनिर्मितेयमिति यन्मूर्तिर्बुधैस्तर्किता ॥ ३२९ ॥
शरणं समसूरिसंपदां हरणं कल्मषसंहतेः सताम् ।
वरणं खलु निर्वृतिश्रियां न मुदे कस्य यदीयदर्शनम् ॥ ३३० ॥
असमा जगति श्रुतश्रियो न पथे संयमशुद्धता गिराम् ।
समतीततुला च सौम्यतेत्यभवंस्ते जगदुत्तरा गुणैः ॥ ३३१ ॥
किं मूर्तिं नवमः श्रितो रसपतिः सिद्धान्ततत्त्वश्रियां
कोशः किं गुणसंपदां मितिमुचां चन्द्रद्युतां किं निधिः ? ।
जीवातुः कलिविद्विषा प्रतिहतः श्रीजैनधर्मस्य किं
दुर्गः किं भवभीतजन्तुनिवहस्येत्यूहितास्ते बुधैः ?॥ ३३२ ॥
न ग्रामे न कुले तनौ न न मुनौ तेषां मनो बन्धभाक्
शय्याऽन्नौषधपानकादि नितरां तैः शुद्धमेवाऽऽहृतम् ।
चातुर्वैद्यरमा ह्यधारि भुवनोत्कृष्टा न चैतद् मत-
स्तत्त्वं तेन वदाम्यहो ! जिनमतस्याऽसूपमास्तेऽभवन् ॥३३३॥
धन्यो धनः सङ्घपतिः पदोत्सवान्
श्रीस्तम्भतीर्थे विविधाद्भुतप्रथम् ।
तेषामहो ! स्तम्भनकेशपार्श्व-
चैत्ये महाराजबलादचीकरत् ॥ ३३४ ॥
ते लेभिरे जन्म मनुप्रमाऽब्द-

शतेषु यातेष्वधिकेषु बाणैः १४०५ ।
हयेन्दुभिः १४१७ संयममिन्दुवेदैः १४४१
पदं खतर्कैस्त्रिदिवं १४६० च तुर्यम् ॥ ३३५ ॥

स्वमायुरन्ते स्वयमाकलय्य ते निषिध्य भक्तं बहुसङ्घसाक्षिकम् ।
संवर्मितां साम्यसुधारसोर्मिभिर्योगिमुद्रां विशदां दधुस्तदा ॥ ३३६ ॥

यच्छ्वासकासौ च कफान्वितौ द्रुतं
व्यनेशतां कोटिगयोगविद्रुतौ ।
तेषां हि गम्या तदनुत्तरा गतिः
संवादमात्रं त्रिदशोक्तयः पुनः ॥ ३३७ ॥

ताश्चेमाः—

खरतरपक्षश्राद्धो मन्त्रिवरो गोवलः सकलरात्रिम् ।
अनशनसिद्धौ भक्त्या गुरुकर्पूरादिभोगकरः ॥ ३३८ ॥
ईषन्निद्रामाप्याऽपश्यन् स्वप्ने सुदिव्यरूपधरान् ।
तानिति वदतस्तुर्ये कल्पे स्मः शक्रसमविभवाः ॥ ३३९ ॥
( युग्मम् )

श्रीगुणरत्नगुरून् ये स्वप्ने स्वरराजरूपिणो दृष्टाः ।
शिष्टाशिष्टविशेषाद्युपलम्भं लम्भयामासुः ॥ ३४० ॥
नैमित्तिकोऽपि वीरोऽपश्यत् तुर्यस्वरिन्द्रसमविभवान् ।
तदनुत्तरगतिलाभाद् युगोत्तमांस्तान् विनिश्चिनुमः ॥ ३४१ ॥

तेषां निखातैर्ध्रुवमुत्तमैर्गुणैः सतां प्रपूर्णानि मनांस्यहो ! तथा ।
यथात्र केषामपि तेषु तेऽधुनाऽवकाशमायान्त्यणुरूपिणोऽपि न ॥३४२॥

तेषां गुणानामचिरस्य चायुषः
प्रमोदखेदाश्रुभरैः स्मृतेर्मम ।
यः स्यात् समं सैष निदानभेदतः
कार्ये भिदैकान्तमतं निरस्यति ॥ ३४३ ॥

---

१ 'भरं स्मरन्नहं लभे समं यं स नि' इत्यपि पाठः ।

विधेर्जराविक्लवता खलायितं
कलेर्भुवो भाग्यविपर्ययोऽथवा ।
पूतीकुभूषा त्रिदिवस्य वाऽभजद्
निदानतामत्र चिरं तदस्थितौ ॥ ३४४ ॥

श्रीसोमसुन्दरगुरुप्रमुखास्तदीयं
त्रैवैद्यसागरमगाधमिहावगाह्य ।
प्राप्योत्तरार्थमणिराशिमनर्घ्यलक्ष्मी-
लीलापदं प्रदधते पुरुषोत्तमत्वम् ॥ ३४५ ॥

न स्थैर्यं सुमनःपथे प्रविदधद् नैवापि वर्णोज्ज्वलः
प्रोद्यच्चापल उल्लसज्जडतया यो निम्नगोल्लासकृत् ।
यद्गर्जत्यपि मादृशो जलदवत् सोच्चैःपदं संश्रितः
तत्त्रैवैद्यमहाब्धिशीकरकणाऽऽदानस्य तज्जृम्भितम् ॥३४६॥

सारस्वते प्रवाहे तेषां शोषं गतेऽधुना कालात् ।
शिष्यैरुपक्रियन्ते विद्याम्भःकूपकैर्लोकाः ॥ ३४७ ॥

दीनाद्युद्धरणात् पदोत्सवकृतैस्तीर्थेषु यात्रादिभिः
सत्रैर्दुस्समये गुरुप्रणमनैर्भक्त्या सदावश्यकैः ।
चैत्योद्धारविधापनैर्वितरणैः क्षेत्रेषु सप्तस्वपि
प्रौढैः पुण्यभरैः प्रभावपदवीं येनाऽऽप्यते शासनम् ॥३४८॥

सर्वेभ्यमालामुकुटस्य तस्य श्रीपातसाहोच्छ्रितमाननस्य ।
कर्णावतीमण्डनचाचसूनोः सङ्घाधिपेन्दोर्गुणराजनाम्नः ॥३४९॥

बन्धुः प्रबुद्धो वचनैर्गुरूणां तेषां महामोहतमोवृतोऽपि ।
आम्रः प्रवव्राज विमुच्य पत्नीपुत्रादिकानद्भुतभाश्च लक्ष्मीः ॥३५०॥

श्यामलनाममहेभ्यस्तेभ्यो बुद्धश्च नव्यरूपवयाः ।
प्राव्राजीत् परिमुच्याऽनुरागरूपोत्तरां जायाम् ॥ ३५१ ॥

मुनीशितारोऽर्धचतुर्थविंशाः प्राबोध्य चाऽन्येऽपि हि दीक्षितास्तैः ।
गुणर्द्धिपात्राणि विचित्रचञ्चज्ज्ञानादिसंपत्पदवीं भजन्ते ॥ ३५२ ॥

मेदपाटपतिलक्षभूमिभृद्रक्ष्यदेवकुलपाटके पुरे ।

मेघवीसलसकेल्हहेमसद्धीमनिम्बकटुकाद्युपासकैः ॥ ३५३ ॥
श्रीतपागुरुगुरुत्वबुद्धिभिः कारितं तदुपदेशसंश्रुतेः ।
तैः प्रतिष्ठितमथाऽऽदिमाऽर्हतो मन्दिरं हरनगोपमं श्रिया ॥३५४॥
(युग्मम्)

कान्ताया गणिसंपदो गणभृतस्तत्पूर्वजस्याऽभवं-
स्तस्मिन् सिद्धिमिते सतीव्रतजुषो या नो कमप्यस्पृशन् ।
ता योगातिजरा बलाज्जगृहिरे तैः कीर्तिकन्याश्च त-
त्संयोगे जनितास्तथापि चरितं तेषामहो ! श्लाघ्यते ॥ ३५५ ॥
किञ्चिच्छान्तमपि प्रमाणपठनैर्जाड्यं पुरा वादिनां
भैषज्यैरिव लघ्वलर्कविषवद्वादे पुनः प्रास्फुरन् ।
नव्याब्देष्विव तेषु दुर्धरतरस्याद्वादगर्जारवं
वर्षत्स्वाप्तमहोन्नतिष्वनुपमोपन्यासपूरामृतम् ॥ ३५६ ॥
पीत्वा विनाशिताम्भोधिं पीताब्धिं कः प्रशंसति ? ।
पीतस्याब्धेर्न यस्याऽस्थादुदरे बिन्दुरप्यहो ! ॥ ३५७ ॥
चन्द्रशेखरसूरीणां ज्ञानाब्धिस्तैस्त्वशेषतः ।
पीत्वा हृदि धृतः सर्वः स्वादुर्दत्तोऽप्यवर्धत ॥ ३५८ ॥
(युग्मम्)

स्त्रीपुंसाद्याकृतिभिरुदिते बाह्यरूपैरविद्या-
शक्त्या भातैस्तदपगमतश्चिन्मयैकात्मलीनम् ।
सत्तामात्रं न यदुपगतं तत्त्वतोऽस्मिन् विवर्ते
चित्तं तेषां तदपि विषयग्रामबद्धं कथं स्यात् ? ॥ ३५९ ॥
साम्यारामे स्थिरतरलयात् सर्वदोन्मीलदेका-
नन्दास्वादेऽपसृतसकलोपाधिजव्याकुलत्वे ।
शान्त्याश्लेषप्रणयिनि यदात्मन्युदेतीह सौख्यं
रम्भाभोगोद्भवमिव हरिस्तत्त एवाऽन्वभूवन् ॥ ३६० ॥
मूलग्रन्थचतुर्दिक्षु शासनौकोऽर्थदीपिकाः ।
दीपिका इव राजन्ते तत्प्रणीताऽवचूर्णयः ॥ ३६१ ॥

तत्कृतिवेला जल्पति पीतत्रैवैद्यवार्धिगाम्भीर्यम् ।
भृगुपुरघोघातीर्थस्तोत्रमुखा विहितचित्तसुखा ॥ ३६२ ॥

ते सत्पदोन्नतिभृतः सुगभीरघोषा
　निर्वापिताखिलजनाऽघनिदाघतापाः ।
प्राप्ता घनागमरमाममृतं ददाना
　घोरथा भवन्तु भुवि मङ्गलवल्लिपुष्ट्यै ॥ ३६३ ॥

सूरीश्वराः श्रीकुलमण्डनाह्वा-
　स्तेषां विनेया अभवन् द्वितीयाः ।
भाग्यं यदीयं पुनरद्वितीयं
　ख्यातं यशश्च त्रितयेऽपि लोके ॥ ३६४ ॥

संवित्तिरेव सततं हृदि वावसीति
　नोऽसंवृतिस्तु लभतेऽपि पदप्रवेशम् ।
क्रुद्धेति साऽऽप्यपरवादिततीर्विरुद्धा-
　स्तेषां जघान किल कल्पजकेलिशर्म ॥ ३६५ ॥

तदीयचातुर्यरमावलोककैः
　संभाव्यतेऽपीन्द्रगुरोः स्म मूर्खिमा ।
शेश्रीयते गोष्पदतां यतः सरो
　महाम्बुराशेः पुरतोऽपि मानसम् ॥ ३६६ ॥

अहो ! नवः कश्चन बोधदीपस्तेषां जगद्भासनशक्तिशाली ।
निःश्वासवातैर्जितवादिनां यः प्रगल्भते स्माऽस्तभवादिदर्पः ॥३६७॥

जन्माङ्कखैरभ्यधिकेषु शक्रे-
　ष्व१४०९श्चौषधीशैर्व्रत१४१७मक्षिवेदैः १४४२ ।
सूरेः पदं चाप शरेषुभि १४५५ स्ते
　चैत्रे ययुः स्वर्जगतामभाग्यात् ॥ ३६८ ॥
　विधेर्जरा० ॥ ३६९ ॥

निजतीर्थिकपरिकल्पितकुमतोद्धरशैलदलनशतधारः ।
तन्निर्मितो विजयते सिद्धान्तालापकोद्धारः ॥ ३७० ॥

अष्टादशारचक्रं तेषां हारश्च हृदयसंस्पर्शात् ।
भापयते विबुधानपि चञ्चद्वर्णस्फुरद्धाभृत् ॥ ३७१ ॥
क्षमाधरगणाकीर्णगच्छभूभारधारिणः ।
दिङ्नागफणिनाथाद्यैः स्पर्धन्ते ते स्म सन्ततम् ॥ ३७२ ॥
उभावेतौ गुरू यातौ नेत्रे तु चरणश्रियः ।
स्खलत्येषा ततः सम्प्रत्यतिचारैः समेष्वपि ॥ ३७३ ॥

तेषां च सूरिगुणरत्नसमन्वितानां
श्रीस्तम्भतीर्थनगरालिगसद्वसत्याम् ।
सौवर्णिको लखमसिंह इति प्रसिद्ध-
श्चक्रे पदोत्सवततीर्वरसङ्घनेता ॥ ३७४ ॥

गुरूत्तमाः श्रीकुलमण्डनास्ते प्रख्याततेजःप्रचयप्रभावाः ।
जगत्पवित्रीकरणाभिधानास्तन्वन्तु मङ्गल्यसुखानि सङ्घे ॥ ३७५ ॥

देवसुन्दरगुरुक्रमपद्मोपास्तिविस्तृतसमस्तगुणा ये ।
तद्विनेयवृषभा विजयन्ते कीर्तयामि ततकीर्तितर्तीस्तान् ॥३७६॥

आद्या जयन्ति गुणरत्नमुनीन्द्रचन्द्राः
सूरीश्वराः सुगुणरत्नविभूषणैर्यैः ।
सा काऽप्यवापि सुभगत्वरमा यया तान्
श्लिष्यन्ति सर्वबुधमानसवृत्तिनार्यः ॥ ३७७ ॥

तेषां निर्जितवादिराजिकुयशोजम्बालजालाविले
भ्रान्त्वा भूवलयेऽखिलेऽथ चलिता खं स्वर्गदण्डाध्वना ।
स्नान्ती श्रान्तिहृतीच्छयेन्दुसरसि स्वैरं सुधाशीकरान्
कीर्तिर्यान् विकिरत्यमी प्रतिनिशं दृश्या ग्रहादिच्छलात् ॥३७८॥
यज्जाता हिमभूभृतः पशुपतेः पत्नीति कः प्रत्यय-
स्तत्कीर्तिर्जनिताऽमुनेति तु सतां नूनं प्रतीतेः पथः ।
एषा यद्धवला हिमाऽपि जनयेद् म्लानिं जवाद् वादिनां

---

१ 'अष्टादशारचक्रं तेषां हारश्च सपदि भापयते ।
विबुधानामपि हृदयं चञ्चद' इत्यपि पाठः ।

२ 'यच्छिशिराऽर्जुनाऽपि' इति च पाठः ।

वक्त्राम्भोजगणेषु निर्दहति च प्रोद्दामदर्पद्रुमान् ॥ ३७९ ॥

ग्रन्थेषु येषु न परस्य धियां प्रवेशो-
ऽप्येतेष्वपि प्रसरतीह तदीयबुद्धिः ।
बेभाययत्यपि तटाश्रितमन्यमब्धि-
र्यः सोऽपि दैत्यरिपुणा किमु नो ममन्थे ? ॥ ३८० ॥

जगदुत्तरो हि तेषां नियमोऽवष्टम्भरोषविकथानाम् ।
आसन्नां मुक्तिरमां वदति चरित्रातिनैर्मल्यात् ॥ ३८१ ॥

सिद्धत्वात् सार्ववैद्यस्य ते सिद्धपुरुषोत्तमाः ।
तदाप्ततत्कणाः शिष्या यद्वशीकुर्वते जगत् ॥ ॥ ३८२ ॥

सर्वव्याकरणावदातहृदयाः साहित्यसत्यासवो
गम्भीरागमदुग्धसिन्धुलहरीपानैकपीताब्धयः ।
ज्यायोज्योतिषनिम्नुपाः प्रदधतस्तर्केषु चाऽऽचार्यकं
वादे तेऽत्र जयन्त्यशेषविदुषां त्रैवैद्यदर्पोष्मलान ॥ ३८३ ॥

उत्कल्लोलं दिशि दिशि बुधाः कर्णपात्रैः पिबन्तः
स्फीतं गीतं सुकृतिततिभिस्तद्यशःक्षीरपूरम् ।
तेषां शुद्धां चरणकमलां बिभ्रतां श्रीगुरूणां
सृष्ट्या स्रष्टा जगदुपकृतं मन्वते सांप्रतं वै ॥ ३८४ ॥

परमेष्ठिमन्त्रतत्त्वाम्नायस्मरणेन दैवतादेशैः ।
पारत्रिक्यैहिकीस्ते प्रायो जानन्ति कार्यगतीः ॥ ३८५ ॥

स्वदर्शने वा परदर्शनेषु वा
ग्रन्थः स विद्यासु चतुर्दशस्वपि ।
समीक्ष्यते नैव सुदुर्गमेऽप्यहो !
यत्र प्रगल्भा न तदीयशेमुषी ॥ ३८६ ॥

या ज्ञानाद्युद्यमप्रौढिर्या च नित्याऽप्रमादिता ।
या चैषां स्मरणाशक्तिः साऽन्यत्र श्रूयतेऽपि न ॥ ३८७ ॥

चक्रु(?)गीकाशलाकां ते षड्दर्शनसमुच्चये ।
ज्ञाननेत्राञ्जनायेव सतां तत्त्वार्थदर्शिनीम् ॥ ३८८ ॥

उद्धृत्य ये व्याकरणाम्बुराशितो विलोड्य बुद्धिप्रसरामराऽद्रिणा ।
शुद्धक्रियारत्नसमुच्चयं सतामाश्चर्यभूतं विबुधालये ददुः ॥३८९॥
लोकोत्तरां सच्चरणश्रियं मुदा सदा भजन्तश्च सरस्वतीं प्रियाम् ।
दुष्कर्मदैत्यव्यथका जयन्तु ते गुरुप्रवेकाः पुरुषोत्तमाश्चिरम् ॥३९०॥

( युग्मम् )

विश्रुतेऽथ नवतां जयिनः श्रीसोमसुन्दरगुरुक्रमपद्माः ५१ ।
संस्मृता अपि विदध्युरनन्तं शीतिभानमघतापहृतेर्ये ॥ ३९१ ॥
सरस्वतीमागमवार्धिसंगतामवाप्य येषां सुरसोर्मिवर्मिताम् ।
पुपूषया स्वस्य नु सन्मनोगणस्त्यजेन्न तीर्थं प्रियमेलकं विदन् ॥३९२॥

न नाममात्रादपि तु स्फुरत्प्रभै-
गुणप्रभावैर्नरसिंह एव सः ।
महोत्सवैर्यः कलिदैत्यहिंसनान्
क्षमाभृतोऽमून सुपदे १४५७ न्यवीविशन् ॥ ३९३ ॥

तान् दृत्येवात्मकीर्त्या विशदसुभगताख्यापनादुत्सुकत्वं
दत्त्वा नीता भजन्ते सकलसुमनसां यन्मनोवृत्तिनार्यः ।
लब्ध्वाऽऽगस्तद्गुरूणां निजनुतिसमयावाङ्मुखत्वावलोक-
क्रुद्धाः प्रोद्यद्गुणौघा निगदितुमिव तत्कर्णपङ्क्तौ विशन्ति ॥३९४॥

सौभाग्यतस्तेऽभ्यधिका[1] हरेः पितुर्वैताढ्यविद्याधरसेव्यताजुषः[2] ।
भजन्ति वामा न परं क्षमाभृतां ध्यायन्ति यत्तान् सुमनोऽबला अपि ॥३९५॥
तैः पाल्यमाने जिनशासनेऽधुना नेशा विधातुं कुमतव्रजा व्यथाम् ।
प्रकाशितं पद्मवनं विवस्वता पराभिभूयेत तमोभरैर्न यत् ॥ ३९६ ॥
आराध्य देवानपि या दुरापा वाणी परैस्तेषु निसर्गतः सा ।
दुरासदाऽन्यैर्विविधैरुपायैर्या श्रीर्हरेः साऽनुचरी स्वभावात् ॥३९७॥
किं मोहाऽहिविषोर्मिमूर्च्छितजगज्जीवातवोऽमूः सुधा-

---

१ 'सौभाग्यमेषामधिकं हरेः' इत्यपि पाठः ।
२ 'जुषाम्' इति च ।

धाराः स्वागमदुग्धवारिधिभवाः स्फारा लहर्यः किमु ? ।
किंवा शासनसौधभासनचणा दीप्राः प्रदीपश्रियः ?
सर्वध्वान्तभिदः सतामिति मतिं तद्देशनास्तन्वते ॥ ३९८ ॥

त एव धर्तुं जिनशाशनं पतत् तद्दु.षमापङ्कभरेऽधुनेशते ।
युगान्तवातोद्धतवार्धिविप्लुतां महावराहाद् न परो दधाति गाम् ॥३९९॥

क्षमापरा इत्यपि साहसिक्यात्
समारतो जेज्यति ते प्रवादान् ।
दन्दह्यते वा शिशिरेतिबुद्ध्या
ऽप्यालिङ्गिताब्जानि न किं हिमानी ? ॥४००॥

उपतदमपि संश्रिते विनेये
विलसति वाग सुमनोमनोऽपहर्त्री ।
गुणवति रमणे तदाश्रित वा
भवति रतिः किल योषितां समाना ॥४०१॥

प्रभवति महिमा यथा तदीयो
जगति न कस्यचनाऽपरस्य तद्वत् ।
प्रसरति तरणेर्मरीचिचक्रं
वियति यथा न तथा हि तारकाणाम् ॥ ४०२ ॥

नित्यं विवृद्धिगकलाः सदखण्डवृत्ताः
प्राप्तोदयाः स्मरहृतोऽस्तकुरङ्गसङ्गाः ।
भ्रान्त्युज्झिता विदलयन्ति तमस्तथापि
श्रीसोमसुन्दरतया प्रथिता अहो ! ते ॥ ४०३ ॥

ते शीतिमानमतुलं दधते भवस्या-
धःकारकारककलावरवृत्तताऽऽढ्याः ।
संदर्शितामृतरसा निजगोविलासैः
श्रीसोमसुन्दरतया प्रथिताः सुयुक्तम् ॥ ४०४ ॥

नानागोचरमारवस्थलततिभ्रान्त्युत्थतापोत्तृषः
सौख्येच्छामृगतृष्णिकाम्भसि न के ताम्यन्ति चेतोमृगाः ? ।

खेलत्यात्मवने लर्या स परमानन्दादिदूर्वाङ्कुरा-
स्वादी साम्यसुधाह्रदे प्लवनकृत्तुष्यंस्तदीयः[1] पुनः ॥ ४०५ ॥
जितद्राक्षा व्याख्या वचनललितं साम्यकलितं
गुरुस्फूर्तिर्मूर्तिर्लवणिमकला दोषविकला ।
अहो ! येषां पोषाङ्कितसुचरणं सिद्धिवरणं
विमुद्रं ते भद्रं ददतु भवतां धीधनवताम् ॥ ४०६ ॥
श्रीसाधुरत्नगुरुविस्तृतभाभरोऽयं
श्रीगच्छमौलिरमलः समलङ्करोति ।
श्रीजैनशासननृपं निहतारिवर्ग-
स्फूर्जत्प्रतापमहिमाप्तजगत्प्रभुत्वम् ॥ ४०७ ॥
वेलेवोल्लासिनी तद्धीर्वैद्याऽपारसागरे ।
दूरं विक्षिपते दृप्यद्वादिनः कर्करानिव ॥ ४०८ ॥
आकौशलधरः काव्योऽप्यानैपुणधरो गुरुः ।
तेषां विद्यासु नैपुण्यादाचातुर्यमयं जगत् ॥ ४०९ ॥
प्रभावकाणां प्रथमः प्रसिद्धिभाक्
स सङ्घनेता प्रथमः प्रशस्यते ।
अचीकरद् योऽद्भुततत्पदोत्सवं
श्रीपत्तनेऽष्टेन्द्रियरत्नवत्सरे १४५८ ॥ ४१० ॥
आहेमचन्द्रात्रिदिवं विधाय प्रभावकोत्पत्तिकथादरिद्रम् ।
स्रष्ट्राऽनुसृष्ट्या पुनरेव तेषां जैनेश्वरं शासनमन्वकम्पि ॥४११॥
वर्षत्सून्नतवारिदेष्विव मुहुर्वादेषु[2] तर्कामृतं
तेषूच्चैःपदसङ्गतेषु भुवि या कीर्तिः सरिज्जायते ।
संपूर्योत्तममानसानि विदुषामुन्मूल्य दर्पद्रुमान्
मिथ्यात्वोरुदवोपशान्तिमपि सा कृत्वाऽब्धिमालिङ्गति ॥४१२॥
कलन्दिकासौरभभृत्पदाम्बुजाश्रितस्य तेषां व्यथते न मूर्खिमा ।

---

१ यस्त्वयं, इत्यपि पाठः ।

२ धर्मोपदेशामृतमिति वा पाठः ।

न नैशमन्धातमसं प्रगल्भते विलेप्तुमुष्णांशुकराम्बुजं यतः ॥४१३॥

यतिजीतकल्पवृत्तिर्वृत्तिरिव चारित्रकल्पवृक्षस्य ।
तन्निर्मिता विजयतेऽतिचारचोरादिचारहरा ॥ ४१४ ॥

उत्फुल्लाक्षैस्तनुलवणिमालोकनात् स्मेरचित्तै-
र्ध्यानाद्भाग्यार्पितगुणततेर्वाक्श्रुतेः प्रीतकर्णैः ।
ये मन्यन्ते विबुधनिकरैर्गौतमस्याऽवतारः
श्रेयःश्रेणीं ददतु जगते ते जयश्रीपरीताः ॥ ४१५ ॥

श्रीदेवसुन्दरगुरुप्रभवो गणेशा
अप्याश्रयन्ति गुरुभिस्त्रिभिरेभिरेवम् ।
सूक्ष्मार्थबोधरतिकान्तहृतिप्रगल्भै-
र्नेत्रैरिव त्रिभुवनेऽपि हि शङ्करत्वम् ॥ ४१६ ॥

श्रीमद्गच्छहिमालये लवणिमोत्कल्लोलपद्मह्रदा-
स्ते नूनं गुरवः सरित्ततिरिवैतेभ्यो विनेयावली ।
उद्भूता भुवनेऽभितः प्रसृमरा वादिद्रुविद्राविणी
पावित्र्यं तनुते हरत्यथ मलं मिथ्यात्वतापापहा ॥ ४१७ ॥

लसन्ति तेषां गणरत्नसिन्धौ मुनीन्द्ररत्नानि महाप्रभाणि ।
क्षमाधराणामपि मौलिमालाशोभाऽखिलाऽऽशासु विधीयते तैः ॥४१८॥

तथाहि—

श्रीदेवशेखरगणिप्रथिताभिधानाः
श्रीवाचकावलिशिरोमुकुटायमानाः ।
तेषां विशुद्धगुणसंयमभासमानाः
शिष्या जयन्ति विगलत्कलिशत्रुमानाः ॥ ४१९ ॥

शिष्यस्तदीयोऽयमपीति मन्यते श्रीवाचकेन्द्रत्वगुणोऽपि मादृशः ।
ग्रहप्रभोः पुत्र इति ग्रहावलौ न पूज्यते पङ्गुरपीह किं शनिः?॥४२०॥

अहो ! तेषां कराम्भोजवासानां सुप्रभावता ।
जातो यैर्मौलिगैर्योग्योऽप्यहकं मुनिसुन्दरः ॥ ४२१ ॥

श्रीश्रुतसुन्दरवाचकवर्याः श्लाघ्या न कस्य गुणनिधयः ? ।

यद्गी:स्पर्धापापाद् मन्ये श्वभ्रे सुधाऽपप्तत् ॥ ४२२॥
जयचन्द्रवाचकैः किल जित्वा विद्याबलेन लघिमानम्।
नीता गुरुबुधशुक्राः स्थेमानं दधति न क्वापि ॥ ४२३ ॥
श्रीभुवनसुन्दरा अपि वाचकवर्या न कस्य हर्षाय ?।
सत्यपि येषां वाणी प्रतिचतुरं लीयते हृदये ॥ ४२४ ॥
श्रीजिनमन्दरवाचकहृदयगृहेऽदोषवैर्यविषयतया।
विनयो गुरुभक्त्या सह विलसति निश्शङ्कमनवरतम् ॥ ४२५ ॥
सम्यक्परिहृतमप्राऽधिकदशभिदसंयमा विशदचित्ताः।
कण्ठस्थाऽऽगमसूत्रस्फुरदर्थाः संवृताऽऽस्रवणाः ॥ ४२६ ॥
जयवर्मनामविबुधाः स्थविरा गच्छेशबन्धवः कस्य ?।
श्लाघ्या नैतत्कालाऽनुत्तरगुणचरणकरणाढ्याः ॥ ४२७ ॥
( युग्मम् )
नानाऽनार्यप्रायान् देशान् दूरेऽप्यबूबुधन् धीराः।
स्थविराश्च देवमङ्गलविबुधा गुरुगच्छकार्यकृतः ॥ ४२८ ॥
अन्येऽपि श्रुतसागरदेवप्रभरत्नसुन्दरा विबुधाः।
अथ सर्वेश्वराह्वाः ख्याताः क्षेमङ्कराह्वाश्च ॥ ४२९ ॥
संविग्नकमलचन्द्राः सदाश्रवा ज्ञानकीर्तयश्चापि।
बुधसाधुसुन्दराऽभयसुन्दरमिश्रा यशःश्रीह्वाः ॥ ४३० ॥
आनन्दवल्लभाह्वा विशदगुणाः सहजधर्मनामानः।
विबुधेन्द्रशीलकुम्भा विख्याताः शान्तिमूर्तिबुधाः ॥ ४३१ ॥
निस्सङ्गतैकरङ्गा वनवासे सोमशेखरा लीनाः।
गुर्वादेशधुरीणा विमलादिकमूर्तयश्चाऽपि ॥ ४३२ ॥
सर्वसमुद्राद्या अपि बहवो लुप्तान्यगणकतारकभाः।
गच्छेशाऽर्ककरा इव दिशि दिशि निघ्नन्ति मोहतमः ॥ ४३३ ॥
( पञ्चभिः कुलकम् )
प्रायो भान्ति गणेऽस्मिन् पदान्यहो ! चतुरशीतिसङ्ख्यानि।
इव तावतां गणानां सारैर्विहितानि विधिनाऽऽप्तैः ॥ ४३४ ॥

गुरुर्विनयो गणभक्तिर्ज्ञानचरित्रादयश्च निर्द्वन्द्वाः ।
आसन् महत्तरायां सुगुणाश्चारित्रचूलायाम् ॥ ४३५ ॥
यस्याः समयार्थमणीविदूरभूमेः पुरः श्रयेद् ब्राह्मी ।
आकौशलं प्रशस्या महत्तरा भुवनचूला सा ॥ ४३६ ॥
प्रवचन-धर्मकथाज्ञौ वादी नैमित्तिकस्तपस्वी च ।
विद्यावित् सिद्ध-कवी प्रभावकाश्चाऽष्ट तद्गच्छे ॥ ४३७ ॥

तथाहि–

आचार्योपाध्याया गणेऽत्र वादाद्यशेषलब्धिजुषः ।
प्रायोऽष्टधाऽपि सर्वे शासनमुद्भासयन्त्यभितः ॥ ४३८ ॥

विभागतोऽपि च–

आचार्यादिपदस्था यतयः साध्व्यो महत्तराद्याश्च ।
श्राद्धाश्च तारतम्यात् प्रवचनकुशला विभान्त्यत्र ॥ ४३९ ॥
श्रीजिनसुन्दरवाचकमनुमितशरदुदयरत्नमुन्याद्याः ।
हरिरिव भुवनान्युदरे बिभ्रत्यङ्गानि निखिलानि ॥ ४४० ॥
सर्वपदस्थाः प्रायो यतयः श्राद्धाश्च मन्त्रिहेमाद्याः ।
धर्मकथालब्धिभृतः करन्ति जिनधर्मसाम्राज्यम् ॥ ४४१ ॥
श्रीसूरिवाचकेन्द्रैर्विद्याधनयाचकीभवद्धिषणैः ।
ध्रियतेऽत्र वादलब्धिर्विबुधैर्यतिभिश्च बहुभिज्ञैः ॥ ४४२ ॥
संवृतसर्वास्रवणप्रबुद्धवरसर्ववल्लभप्रमुखाः ।
अवितथनिमित्तविज्ञा गणरक्षणदक्षिणा बहवः ॥ ४४३ ॥
गुरुगच्छबालवृद्धप्रमुखमहानेककार्यनिष्णाताः ।
सर्वधुरीणप्रवरा माध्यस्थ्याद्यैरनन्यसमाः ॥ ४४४ ॥
द्वादशधा तपसि रता गुणवर्धनसाधुसागरप्रमुखाः ।
लोकोत्तरगुणचरिता निवसन्ति मनस्सु नो केषाम् ? ॥ ४४५ ॥
येषां तपःशक्तिहतप्रभावाः सप्तर्षयः शून्यमहो ! भ्रमन्तः ।
शास्त्रैर्निषिद्धामपि रात्रिचर्यां चरन्त्यदृश्याः किल लज्जयाऽहि ॥४४६॥
मासद्वयोपवासप्रमुखैः संसारतारणमुखैश्च ।

त्रिदिनोत्सर्गाद्यैरपि विविधैर्बाह्याऽऽन्तरतपोभिः ॥ ४४७ ॥
ते सर्वदेवादिमुनीश्वराश्च निस्तन्द्रसंवेगसुधाभितृप्ताः ।
प्रत्याययन्तः किल धन्यमेघश्रीशालिबाहुप्रमुखाञ् जयन्ति ॥ ४४८ ॥
श्रीवीरभक्त्या मदमुग् दशोनं षाण्मासिकं यो विदधे तपोऽग्र्यम् ।
महातपःकर्मसु नित्यलीनं तं शान्तिचन्द्रं गणिराजमीडे ॥ ४४९ ॥
जानाना गुरुविहितं स्खलिते शकटालजन्मनो दण्डम् ।
गुप्तधना विद्याढ्या बहवः सिद्धाश्च सन्त्यत्र ॥ ४५० ॥
किं वाच्यं कविसंपदि बाला अपि यत्कवित्वगुणललितैः ।
बुधगुरुकविभिः स्पर्धागर्धं गच्छेऽत्र बाभजति ॥ ४५१ ॥
किं बाणः को मुरारिर्न कविकुलकलः सोऽचलो नाऽमरो वा
नाश्वासः कालिदासे विलसति न गिरां चाऽपि हर्षे प्रकर्षः ।
भोजः सौजःप्रभो नो न च हरति मनो भारविर्नैव माघः
प्रेक्ष्यन्तेऽस्मिन विचित्रा विशदमतिजुषः शंपुषश्चेन् कवीन्द्राः॥४५२॥
अथ प्रभावककवित्वादीनि—
अत्र स्वप्रतिभाप्रकर्षपदवीप्रास्तप्रवीणप्रभा
बुद्ध्वा पारगतागमेष्ववितथं सूक्ष्मार्थसार्थप्रथाम् ।
तत्त्वज्ञानलसत्प्रदीपनिहतध्वान्ताभमिथ्याधियो-
ऽनूचानादिमुनीश्वराः प्रवचनप्रावीण्यमाबिभ्रति ॥ ४५३ ॥
अस्मिन धर्मकथाप्रथास्ववितथप्रावीण्यलुभ्यत्प्रभा
भ्राजन्ते निजदेशनानवरसैः पीयूषयूषोपमैः ।
कुर्वाणाः स्मृतिगोचरे सुमनसां श्रीसूरिमुख्या महा-
लब्धीः पूर्वमुनीश्वरेषु विदिताः क्षीरास्रवत्वादिकाः ॥ ४५४ ॥
तर्कभ्यासविलाससाधुविविधोपन्यासवात्याबलात्
प्रोद्धूतेद्धमदप्रवादिविदुरप्रोत्तालतूलव्रजाः ।
भूपादिप्रकटप्रभावविभवा वादेषु लब्धप्रभा
भ्राजन्ते प्रतिभाभिभूतधिषणा नैकेऽत्र वादीश्वराः ॥ ४५५ ॥
भौमाभ्रादिभवन्निमित्तविदुराः सम्यक्श्रुताभ्यासतः

केचित् केऽपि च पात्रतामधिगताः सन्मन्त्रयन्त्रश्रियाम् ।
सिद्धाभिस्त्वनवद्यहृद्यविलसद्विद्याभिरन्येऽधिका
नानाऽऽम्नायसमृद्धिभिस्तदपरे चूर्णादिसंवेदिनः ॥ ४५६ ॥
क्षीराम्भोनिधिजिद्गभीरहृदये गूढस्वशक्तिश्रियः
प्रौढे च प्रविदर्श्यमानविभवाः संघादिकार्यव्रजे ।
अस्मिन् शासनभासनैकनिरताः स्वाचारसंचारिणो
द्योतन्ते मुनिनायका भवभिया सावद्यमुक्तक्रियाः ॥ ४५७ ॥
( युग्मम )
दुष्टादृष्टजकष्टपिष्टपटुभिः षष्ठाष्टमाद्यैः सदा
सन्मासक्षपणादिकैश्च मुनयो बाह्यैर्विचित्रक्रमैः ।
एकाहं द्व्यहकं त्र्यहं च विहितोत्सर्गादिभिश्चान्तरै-
रस्मिन् शासनभासनं विदधते प्रौढैस्तपःकर्मभिः ॥ ४५८ ॥
सत्काव्यादिकलाकलापकुशलं संश्रुत्य येषां वचः
कारुण्यं दधते गुरौ सुमनसां प्राज्ञाः कवौ ज्ञेऽपि च ।
राजन्यावलिमौलिमौलिगमणीदीप्रांह्रयः सूरय-
स्तेनैकेऽत्र विभान्ति कोविदसभालङ्कारहारोपमाः ॥ ४५९ ॥
प्रभावकैरेवमनुत्तरप्रभैरयं समग्रैरपि राजते गणः ।
न रत्नजातिः खलु सा प्रजायते रत्नाकरं या समतीत्य वर्तते ॥४६०॥
गणे भवन्त्यत्र न चैव दुर्मदा
नहि प्रमत्ता न जडा न दोषिणः ।
विदूरभूमिः किल सोपवीति वा
कदापि किं काचमणीनपि क्वचित् ? ॥ ४६१ ॥
कस्मात् कस्माद्विनिर्गत्य हेतुभिर्विशदेतरैः ।
कलौ प्रशाखाप्रतिमा बभूवुर्बहवो गणाः ॥ ४६२ ॥
प्रौढावदाततोऽयं तु प्राप्तोऽप्याह्वां नवां नवाम् ।
श्रीसुधर्मगणाधीशादारभ्याऽखण्डसन्ततिः ॥ ४६३ ॥
आज्ञाभङ्गान्तरायैस्थानन्तसंसारनिर्भयैः ।

सामाचार्योऽपि पाश्चात्यैः प्रायः स्वैरं प्रवर्तिताः ॥ ४६४ ॥
उपधानप्रतिक्रान्तिजिनार्चादिनिषेधतः ।
न्यूनिता दुःषमादोषात् प्रमत्तजनताप्रियाः ॥ ४६५ ॥
यत्तत्प्रासुकमिष्टाम्बुप्रवृत्त्यादिसुखावहाः ।
[1]वीक्ष्यन्तेऽन्यगणेष्वत्राऽऽचरणा लक्षणोज्झिताः ॥ ४६६ ॥
(त्रिभिर्विशेषकम्)

या श्रीवीरसुधर्माद्यैः प्रणीता स्वागमानुगा ।
आचीर्णा स्थविरैः कालानुरूपयतनाश्रिता ॥ ४६७ ॥
सामाचारी गणेऽस्मिंस्तु शुद्धा सैवास्त्यखण्डिता ।
परम्पराऽऽगता सर्वगणान्तरगताधिका ॥ ४६८ ॥
(युग्मम्)

विनयाऽनीहताक्षान्तिनैर्ग्रन्थ्यप्रमुखा गुणाः ।
दुर्लभा ये कलौ सर्वे तेऽपीक्ष्यन्तेऽत्र निर्मलाः ॥ ४६९ ॥
अत एव मिथो धर्मस्नेहः सूरिवरादिषु ।
संविग्नेष्वागमज्ञेषु गणबन्धोऽपि निःसमः ॥ ४७० ॥
न स्वः कोऽपि परो वाऽत्र नैहिकोपक्रियापि च ।
तथाप्येनं भजन्ति ज्ञाः सर्वे ज्ञानक्रियोत्तरम् ॥ ४७१ ॥
अयमेव तदासेव्यो मध्यस्थैः स्वहितैषिभिः ।
उपेक्ष्य कुलगुर्वादिकदाग्रहहतान्त्र जडान् ॥ ४७२ ॥

मेयः कथं महिमवार्धिरयं गणेश-
श्रीदेवसुन्दरयुगोत्तमसूरिराजाम्[2] ? ।
यत्पारगाणि न चिरादपि सन्मनांसि
यानि प्रयान्ति सुरशैलशिरोऽपि वेगात् ॥ ४७३ ॥
एषां प्रभावकवरा विलसन्ति गच्छे
यद्वत् तथा नहि परेष्वपि शिष्यमात्राः ।

---

१ 'वीक्ष्यन्ते चाऽन्यगच्छेष्वाचरणा लक्षणाऽस्थिता' इत्यपि पाठः ।
२ 'पादुकानाम्' इति च पाठः ।

आबद्धमौलिमुकुटा इव चक्रिपुर्यां
पुंष्ठकुरा अपि न कर्बटकेषु दृश्याः ॥ ४७४ ॥
अहो ! रत्नत्रयी सैषामनर्घ्या कापि विष्टपे ।
रत्नकोटीरपि त्यक्त्वा यत् तामाददते बुधाः ॥ ४७५ ॥
एषां शुद्धवचःप्रबुद्धहृदया मन्त्रीशहेमादयो
निस्सङ्गाः स्वजनादिपूज्झितगृहारम्भानवद्यक्रियाः ।
तैस्तैः स्वैश्चरितैरुदारललितैर्धर्मोपदेशामृतैः
प्रौढिं संगमयन्त्यहो ! तदभयानन्दादिवच्छासनम् ॥ ४७६ ॥
तदवाप्तधर्मदार्ढ्यसङ्घपतिर्लल्लसूनुनाथाह्वः ।
गणधर्माऽऽधारकरः प्रभावको भाति नृपमान्यः ॥ ४७७ ॥
एषां नानागुणमणिनिचितेऽपारगच्छाम्बुराशौ
दूरक्षिप्तातिचरणविलुठत्सङ्करे श्रीजयाढ्ये ।
उत्कल्लोले नवनवमहिमश्रीद्धशिष्यावदातैः
सर्वेऽप्यन्ये प्रदधति गणकाः कण्ठकूपोपमानम् ॥ ४७८ ॥
सर्वतः प्रसरभाञ्जि यशांसि क्षीरनीरनिधयन्ति यमीशाम् ।
तानि तत्र परसूरिततीनां शीकरावलिरिवाथ विभान्ति ॥४७९॥
येषां परेषामथ सूरिराजां चिकीर्षता विश्वकृता यशांसि ।
उन्मानबीजानि विचाक्रिरे प्राक् पूर्णेन्दुबिम्बं किल तारकाश्च॥४८०॥
एभिः स्फीतैः शशधरकिरणक्षीरडिण्डीरगौरैः
शुक्लाद्वैतं त्रिजगति गमिते स्वैर्यशोभिः प्रपूर्य ।
अन्येषां चेद् वरिवृतति तदा तल्लवा नैव लभ्याः
सत्ता यस्माद्विरमति सरितां सिन्धुना संगतानाम् ॥ ४८१ ॥
कोऽवेदयिष्यत् तुलनामतीतान् श्रीगौतमस्वामिमुखानतीतान् ।
युगोत्तमाभा यदि नाभविष्यन् निदर्शयन्तः स्वगुणैरिमे तान् ॥४८२॥
वीरेण ये शासनधारका महाचार्याः स्वनिर्वाणपदादनूदिताः ।
एतेऽवगम्याः खलु ते गुणोच्चयैराज्ञैतदीयैव शिवाय तत्कृता ॥४८३॥

१ 'चरणानिकरावस्करे श्रीजयाढ्ये' इत्यपि ।

एतच्च काव्यपञ्चकं प्राग् लिखितमप्यधिकारसौष्ठवात् पुनरिहापि लिखितमिति ।

श्रीवीरतोऽभूद् गणराट् स सप्तत्रिंशो बृहद्गच्छपसुर्वदेवः ।
तस्माज्जगच्चन्द्रगुरुस्तपाह्वामूलं गणेन्द्रो नवमश्च४५जज्ञे ॥४८४॥

तस्माज्जयन्ति गुरवो गुरवोऽत्र षष्ठाः
श्रीदेवसुन्दरगणप्रभवो ५० ऽधुनेमे ।
स्युर्द्वादशाऽथ निखिलानधिकृत्य सूरी-
नेभ्योऽपि पञ्च किल सप्तदशेति सर्वे ॥ ४८५ ॥

एवं श्रीवीरजिनात् सन्ततिकृद्गच्छनाथगुरुगणने ।
एते स्युः पञ्चाशा आसन् बहवोऽन्तराले च ॥ ४८६ ॥

त्रिपञ्चाशचतुष्पञ्चाशत्वाद्यपि भजन्त्विमे ।
श्रीसम्भूतजयानन्दादिगणेशक्रमाश्रयात् ॥ ४८७ ॥

विश्वातिशायिमहिमाम्बुधयो जयन्तु
श्रीदेवसुन्दरयुगप्रवराश्रिराय ।
श्रीशासनोद्धरणधीरतमाः क्रियासुः
श्रेयःश्रियं सुविपुलां विपुलाङ्गभाजाम् ॥ ४८८ ॥

श्रीवीरतीर्थकमले प्रवचनमातृप्रबुद्धदलकलिते ।
सूरैर्युगप्रधानैः प्रकाशिते महिमसौरभ्ये ॥ ४८९ ॥

विलसन्ति राजहंसा यावच्छ्रीसङ्घलोकमधुपाश्च ।
दुष्प्रसहान्ता तावत् सन्ततिरेषां चिरं जयतु ॥ ४९० ॥

युगोत्तमानां गुणसिन्धुबिन्दूनादाय वाणीति कृता पवित्रा ।
मयार्जितं यत्किल तेन पुण्यं ततोऽस्तु मे ज्ञानचरित्रशुद्धिः॥४९१॥

आमूलतः सुविहितावलिमौलिमौलि-
श्रीमत्तपागणनभोऽर्कगुरूत्तमानाम् ।
श्रुत्वा गुरुप्रभुमुखाद् ग्रथितेति किञ्चि-
दैतिह्यपङ्क्तिरमला गुरुगच्छभक्त्या ॥ ४९२ ॥

रस-रस-मनुमितवर्षे १४६६ मुनिसुन्दरसूरिणा कृता पूर्वम् ।

२ 'गुरवः किल षष्ठसंख्याः' इति च ।

मध्यस्थैरवधार्या गुर्वालीयं जयश्रीद्धा ॥ ४९३ ॥
प्रायो गुरूणां मुखतोऽधिगम्याऽन्यतोऽपि किञ्चिच्च विनिर्मितेयम्।
यच्चाऽत्र किञ्चिद् वितथं बुधैस्तच्छोध्यं च मिथ्यास्तु च दुष्कृतं मे ४९४

जगत्त्रयख्याततपागणस्य शाखा स्तुतेयं बृहती मयेति ।
किञ्चिच्च लघ्वी सकला अपीमाः श्रीवीरमार्गानुगमा जयन्तु॥४९५॥

मूलं यस्य जिनेश्वरो गणभृतां स्कन्धोपमं मण्डलं
शाखाः सन्ततयस्तताश्च यतिनां साध्व्यः प्रशाखाः पुनः ।
श्राद्धाः पत्रगणाश्च मञ्जरितुलारूढाश्च सुश्राविकाः
सर्वाभीष्टफलप्रदः स जयति श्रीसङ्घकल्पद्रुमः ॥ ४९६ ॥

इति श्रीयुगप्रधानावतारश्रीमत्तपागच्छाधिराजबृहद्गच्छनायकपूज्याराध्यपरमाप्तपरमगुरुश्रीदेवसुन्दरसूरिगणराशिमहिमार्णवानुगामिन्यां तद्विनेयश्रीमुनिसुन्दरगणिहृदयहिमवद्वतीर्णश्रीगुरुप्रभावपद्मह्रदप्रभवायां श्रीमहापर्वाधिराजश्रीपर्युषणापर्वविज्ञप्तित्रिदशतरङ्गिण्यां तृतीये श्रीगुरुवर्णनस्रोतसि गुर्वावलीनाम्नि महाह्रदेऽनभिव्यक्तगणना एकषष्टिस्तरङ्गाः ॥

॥ सम्पूर्णश्चायं श्रीगुर्वावलीनामा महाह्रदः ॥
॥ इति बृहत्तपागच्छश्रीगुर्वावली बृहती श्रीमुनिसुन्दरसुरिकृता ॥



# अद्यावधि मुद्रिता ग्रन्थाः ।

१. प्रमाणनयतत्त्वालोकालङ्कारः—जैनन्यायदर्शनस्यापूर्वोऽयं प्रवेशग्रन्थः, कर्ता चास्य श्रीवादिदेवसूरिः। मूल्यम् ०-८-०

२. हैमलिङ्गानुशासनम्—अवचूरिसहितम् । लिङ्गबोधकोऽयं मनोहरो ग्रन्थः । कर्ताऽस्य श्रीहेमचन्द्राचार्यः। ,, ०-५-०

३. सिद्धहेमशब्दानुशासनम्—लघुवृत्तिधातुपाठादिसहितम्—व्याकरणे व्युत्पित्सूनां सरलोऽयं ग्रन्थः—कर्ताऽस्य श्रीहेमचन्द्राचार्यः । ,, ३-०-०

४. रत्नाकरावतारिकायाः टिप्पणपञ्जिकासहितायाः परिच्छेदद्वयम्—प्रमाणनयतत्त्वालोकालङ्कारस्य व्याख्यानरूपं रत्नप्रभाचार्यविरचितम् । ,, १-०-०

५. सिद्धहेमशब्दानुशासनम्—मूलमात्रम् । ,, ०-५-०

६. मुद्रितकुमुदचन्द्रप्रकरणम्-श्रीश्रावकयशश्चन्द्रकृतम् ,, ०-८-०

७. क्रियारत्नसमुच्चयः—गुणरत्नसूरिरचितः—सकलवैयाकरणानामुपकारी । ,, २-०-०

८. श्रीसिद्धहेमशब्दानुशासनसूत्रपाठस्याकारादिक्रमेण सूचीपत्रम् । ,, ०-४-०

९. कविकल्पद्रुमः । ,, ०-४-०

१०. सम्मतितर्काख्यप्रकरणस्य—प्रथमो विभागः, श्रीसिद्धसेनदिवाकररचितः । श्रीराजगच्छीयाभयदेवसूरिरचितया तत्त्वबोधविधायिन्या व्याख्यया विभूषितः । अयं ग्रन्थो जैनदार्शनिकविषयस्य सम्यग्विवेचकः सकलन्यायग्रन्थानां मौलिमुकुटतामावहति । ,, ३-०-०

११. जगद्गुरुकाव्यम्-श्रीपद्मसागरगणिविरचितम् ,, ०-४-०

१२. श्रीशालिभद्रचरितम्—टिप्पणसहितं, श्रीधर्मकुमारसुधिया विरचितम् । अपूर्वोऽयं कथाग्रन्थः । ,, १-४-०

१३. पर्वकथासंग्रहस्य प्रथमो विभागः । ,, ०-४-०

१४. षड्दर्शनसमुच्चयः—श्रीराजशेखरसूरिविरचितः,, ०-४-०

१५. शीलदूतम्—श्रीचारित्रसुन्दरगणिविनिर्मितम्। ,, ०-४-०

१६. निर्भयभीमव्यायोगः—श्रीरामचन्द्रसूरिविरचितः,, ०-४-०

१७. श्रीशान्तिनाथमहाकाव्यम्—श्रीमुनिभद्रसूरिविरचितम् ।
,, ३-०-०

१८. रत्नाकरावतारिका— श्रीरत्नप्रभाचार्यकृता— तृतीयपरिच्छेदादारभ्याऽष्टमपरिच्छेदपर्यन्ता । ,, १-८-०
,, आद्यपरिच्छेदद्वयस्य । ,, १-०-०
,, प्रथमाद्यष्टमान्तस्य संपूर्णस्य । ,, ३-०-०

१९. उपदेशतरङ्गिणी । ,, ३-०-०

२०. न्यायार्थमञ्जूषा स्वोपज्ञलघुन्याससहिता । ,, ३-०-०

२१. गुरुगुणरत्नाकरकाव्यम्—अस्मिन् लालित्यमये खण्डकाव्ये तपागच्छाचार्यश्रीलक्ष्मीसागरसूरीणां चरित्रमैतिहासिकदृष्ट्या सरससमुपवर्णितम्। अन्येषामपि तात्कालिकानां बहूनां महात्मनां चरित्राणि प्रसङ्गतो निवेशितानि सन्ति । कर्ताऽस्य श्रीसोमचारित्रगणिः । ,, ०-८-०

२२. विजयप्रशस्तिमहाकाव्यम्, सटीकम्—अस्मिन् महाकाव्यसर्वलक्षणान्विते ग्रन्थे श्रीहीरविजयसूरि—श्रीविजयसेनसूरि—श्रीविजयदेवसूरीणांचरित्राणि रसावर्षिण्या सुसंबद्धपद्धत्या सम्यग् निर्वर्णितानि। प्रसिद्धनरपतिश्रीअकब्बरपातिशाहिना सह जातं हीरविजयसूरीणां वृत्तान्तमपि यथार्थत्वेनोपदर्शितम्। निर्माताऽस्य कविपुरन्दरः श्रीहेमविजयगणिः।
मूल्यम्—५—०—०

प्राप्तिस्थानम्—
शा. हर्षचन्द्र—भूराभाई.
अंग्रेजीकोठी, बनारस सिटी ।

॥ अर्हम् ॥

# ॥ विजयप्रशस्तिसार ॥

कर्ता

आचार्योपासकः-मुनि विद्याविजय।

लखनऊ निवासी बाबू दीपचन्दजी सुन्दरलालजी, श्रीमाल
की सहायता से शाह-हर्षचन्द्र भूराभाई सम्पादक
'जैनशासन' ने प्रकाशित किया।

वीर सं० २४३९ सन्-१९१२

श्रीदामोदर प्रेस लखनऊ में एस. एन. शर्मा द्वारा मुद्रित।

अर्हम्

# समर्पण

परोपकार परायण, धर्मधुरंधर, शासन रक्षक,

पूज्यपाद प्रातः स्मरणीय, श्रीगुरु वर्य्य समीपेषु !

गुरु देव !

परमात्मा वीरके शासनकी उन्नति के लिये, जैन साहित्य के प्रचारके लिये, आप श्रीमान् का अविश्रान्त उद्योग और प्रशंसनीय प्रयत्न सर्वसाधारण पर विदित है किसी से छिपा नहीं है। 'सवी जीव करुं शासनरसी' इसलोकोक्तिको आपने चारितार्थ ही कर दिया है। इतना ही नहीं ? मेरे जैसे पामरोंके उद्धारके लिये जिस २ भांति से--जिस २ प्रकार से आपश्रीने अनुग्रह कियाहै, वह सर्वथा अनिर्वचनीय है। इन उपकारों से अनुगृहीत होता हुआ इस छोटीसी पुस्तक को आप की सेवा में आदर पूर्वक समर्पण करता हूँ।

सब प्रकार से आपका

विद्याविजय



॥ अर्हम् ॥

श्रीमद्विजयधर्मसूरिभ्योनमः ।

# * उपोद्घात *

इस बात के कहने की आवश्यकता नहीं है कि-आत्महित और परहित साधन करने वाले शुद्धचरित्रवान् महापुरुषों के जीवनचरित्र के अध्ययन से मनुष्यजाति को जितना लाभ हुआ है और हो सकता है, उतना किसी अन्य साधन से नहीं होसकता ।

जीवनचरित्र मोहान्धकार में पड़े हुए लोगों को ज्ञान प्रकाश में लाने वाली एक अपूर्व वस्तु है । जीवनचरित्र आन्तरिक सद्गुण रूप स्वच्छता और दुर्गणरूप मलीनता दिखाने वाला अद्भुत दर्पण है । संसार में जितने शिष्ट पुरुष हुए हैं, सबने अपने सामने किसी आदर्श पुरुष का जीवन चरित्र ही रख कर उन्नति के मार्ग में प्रवेश किया है। यह बात स्वाभाविक और अनिर्वार्य है ! विना किसी आदर्श के मनुष्य कुछ कर नहीं सकता। मनुष्य का आचरण आदर्श के अनुसार ही होता है । ऐसे अवसर में महा पुरुषों की जीवनी सर्व साधारण मनुष्यों के चरित्र सुधारने में कहाँ तक उपयोगी होसकती है ? इस बात को सहृदय पाठक स्वयं अनुभव कर सकते हैं ।

इस पुस्तक में वर्णित चरित्र नायकों के आचरण से मनुष्यमात्र असीम लाभ उठा सकते हैं । यह सब के मननयोग्य रहस्य है। मुख्य तथा जगद्गुरु श्रीहीरविजयसूरि, श्रीविजयसेनसूरि तथा श्रीविजयदेवसूरि-इन तीन महात्माओं के पवित्र चरित्रों से यह ग्रंथ गुंफित है। ये महात्मा विक्रमीय सोलहवीं और सतरहवीं शताब्दियों में हुए हैं। बालपन में विरक्त होकर दीक्षा के उपरान्त हमारे तीनों चरित्र नायकों ने शासन उन्नति के लिये कितना घोर प्रयत्न किया था-उनका शासन

प्रेम कितना दृढ़ और प्रगाढ़ था—सम्राट् अकबर जैसे नरपालों को प्रतिबोध करने में कितने साहस और उत्कर्ष का उन महानुभावों ने परिचय दिया था, एवं उस यवनराज्यत्वकाल में स्वधर्मरक्षा के लिए यह लोग कैसे उद्यत थे यह सब बातें सूक्ष्मतया इस ग्रन्थ में निगदित है। सुतरां यह भी ज्ञात होगा कि-वे महानुभाव ऐसे धुरंधर आचार्य होने पर भी तप-जप-संयम-त्याग वैराग्य में कैसे सुदृढ़ थे ? । पुनः इस पुस्तक के अवलोकन से ऐतिहासिक विषय के भी बहुत संदिग्ध रहस्यों का पता लग सकेगा ।

इस पुस्तक को मैने 'श्रीविजयप्रशस्ति' नामक महाकाव्य के आधार पर निर्मित किया है। और कतिपय अन्य पुस्तकों से भी सहायता ली है । तिस पर भी यदि किसी अशुद्धि को कोई पाठक सप्रमाण सूचित करेंगे तो मैं द्वितीयावृत्ति में उसे सहर्ष सुधारने की चेष्टा करूंगा ।

इस ग्रंथ के निर्माण करने में मेरे सुयोग्य ज्येष्ठ बन्धु, न्याय शास्त्र के धुरंधर विद्वान् महाराज श्रीवल्लभविजयजीने बहुत सहायता प्रदानकी है अतएव मैं आपका अनुगृहीत हूँ।

यद्यपि मेरी मातृभाषा गुजराती है, तथापि इस पुस्तक को मैने हिन्दी में लिखने का साहस किया है । अत एव इसमें भाषा संबन्धी अशुद्धियाँ का बाहुल्य होना सम्भव है । आशा है कि पाठकवृन्द उन अशुद्धियाँ की ओर दृष्टिपात न करके पुस्तक के सारही को ग्रहण करेंगे ।

कार्तिकी पूर्णिमा
वीर सम्वत् २४३९
ता० २४-११-१२

कर्त्ता

अर्हम्

श्रीमद्विजयधर्मसूरिभ्यो नम :

# ' विजयप्रशस्तिसार '

---

## * पहला प्रकरण *

( विजयसेन सूरिका जन्म और ' कमा ' शेठकी दीक्षा )

जिस समय मेदपाट ( मेवाड ) देश, कर्णाट-लाट—विराट—घन-घाट-सौराष्ट्र—महाराष्ट्र—गौड़-चौड़-चीन-वत्स मत्स्य-कच्छ—काशी-कोशल—कुरु अंग-वंग-चंग और मरु आदि देशों में सबसे बढ़ कर प्रधान गिना जाता था, जिस समय उसकी भूमि रस पूर्ण थी, जिस समय उस देश के समस्त लोग ऋद्धि समृद्धि से कुबेरकी स्पर्द्धा कर रहे थे और जिस समय वहां के निवासी ( रंक से लेकर राय पर्यन्त ) नीति-धर्म का सम्यक्प्रकार से पालन कर रहे थे, उस समय, एकरोज आकाश में भ्रमण करते हुए और नानाप्रकार की भूमि को देखने की इच्छा से ' **नारद** ' मुनि इस मेदपाट( मेवाड़ )देश में आए। इस देश की उन्नति और स्वाभाविक सरलता से आप अधिक प्रसन्न हुए और आपने इस विशाल प्रदेश में कुछ काल तक निवास भी किया। क्योंकि वहाँ आपके नाम से एक नगर बस गया जिसका नाम ' नारद पुरी ' पड़ा।

इस अलौकिक नारद पुरी का यथार्थ वर्णन होना कठिन है। क्या यह लेखनी इस कार्य को अच्छी तरह कर सकती है ? कभी नहीं।

इस नारद पुरी के पास एक पर्वत के शिखर पर श्रीप्रद्युम्नकुमार ने श्रीनेमीनाथ भगवान् का एक चैत्य (मन्दिर) बनवाया। और उन्हों ने इस मन्दिर में बहुत ही मनोहर और नेत्रों को आनन्द देनेवाली श्रीनेमीनाथ भगवान की प्रतिमा स्थापित की। प्रद्युम्नकुमार इस भगवान् के ध्यान को अपने अन्तःकरण से दूर नहीं करते थे और अहर्निशि धर्म भावना में समय का सदुपयोग करते थे।

इस नारद पुरी में एक 'कमा' नाम के शेठ रहते थे। उनकी 'कोडीमदेवी' नामकी एक धर्मपत्नी थी। इन दोनों की देव में देवबुद्धि, गुरु में गुरुबुद्धि और धर्म पर भी पूर्ण श्रद्धा थी। अर्थात् यह दोनों सम्यक्त युक्त थे। क्योंकि श्रीहेमचन्द्राचार्य प्रभु कहते हैं कि:—

या देवे देवता बुद्धि र्गुरौ च गुरुतामतिः।
धर्मे च धर्मधिः शुद्धा सम्यक्त्वमिदमुच्यते ॥१॥

इन दोनों की श्रीजिनेश्वर में परम भक्ति और साधुजनों में परम प्रीति थी। मन, वचन, कायासे यह दोनों धर्म प्रचार के वीर रूपही होरहे थे। औदार्य, शौर्य गांभिर्यादि उत्तमोत्तम गुण तो मानो इनके दास होकर रहते थे। इस दम्पती के पुत्र सुखका सौभाग्य नहीं प्राप्त था और इस कारण यह बड़े दुःखी रहते थे। किन्तु दोनों मोक्ष के अभिलाषी होने से अपने द्रव्य को*सात क्षेत्रों में खर्चते थे और क्लिष्ट कर्मों को क्षय करने वाले तपमें लवलीन रहते थे। और यह दोनों सदा बड़ी श्रद्धा पूर्वक पञ्चपरमेष्ठी मंत्र का ध्यान करते थे।

एक समय की बात है कि कोडीम देवी नित्य नियमानुसार एक रोज पञ्चपरमेष्ठी का ध्यान करती हुई निद्रा के आधीन हो गई। इस देवी ने रात्रि में एक स्वप्न देखा। क्या देखती है कि

* साधु, साध्वी, श्रावक, श्राविका, जिनभवन, बिम्ब और ज्ञान

एक बड़ा भारी सिंह, सामने खड़ा है जो कि हस्तिओं के त्रास का निदान भूत गर्जना को करता है, जिसका रंग सर्वदा सफेद है। जिसने अपना मुँह निकाला है। जिसका बड़ा भारी पूंछ गोलाकार हुआ है। इस प्रकार के स्वप्न को सम्यक्प्रकार से देखती हुई आनंद से भरी हुई कोडीम देवीने निद्रा को त्यागा। प्रातःकाल उठ कर उसने अपने पति को नमस्कार करके रात्रिमें देखा हुआ स्वप्न निवेदन किया। क्योंकि पतिव्रता—सती स्त्री के लिये तो स्वप्न अपने पति को ही कहने योग्य हैं।

'कमा' शेठ ने इस उत्तम स्वप्न का फल बड़े विचार पूर्वक कहा कि—"हे प्रिये ! इस उत्तम स्वप्न के फल में तुझे पुत्रोत्पत्ति होगी।" बस ! इस कथन को सुनती हुई कोडीम देवी अतीव आनंद में निमग्न होगई। बस उसी रोज से देवीने गर्भको धारण किया। जब उत्तम जीवका जन्म होने वाला होता है तब माता को उत्तमोत्तम दोहद ( गर्भ लक्षण ) उत्पन्न होते हैं। इस गर्भ को धारण करने के बाद कोडीम देवी को भी उत्तमोत्तम दोहद उत्पन्न होने लगे। जैसा कि उसके चित्त में इस बातकी बलवती इच्छा हुई कि मै गरीब लोगों को दान दूँ। जिनेश्वर भगवान्की पूजा करूं। मुनिराज के द्वारा भगवानकी वाणी का पान करूं। पवित्र मुनिराजों को दान दूँ। श्रीसंघमें स्वामी वात्सल्य करूं। तीर्थ यात्रा करूं, इत्यादि। कमा शेठ ने विपुल द्रव्य से अपनी शक्त्यनुसार इन इच्छाओं को पूर्ण किया। देवी भी गर्भवती स्त्री के योग्य कार्यों को करती हुई जिसमें किसी प्रकार से भी गर्भ को तकलीफ न होवे उसी प्रकार यत्न पूर्वक रहने लगी।

दिन—प्रतिदिन गर्भ बढ़ने लगा। अनुक्रमे कोडीम देवी ने विक्रम संवत् १६०४ मिती फाल्गुन शुक्ल पूर्णिमा के दिन उत्तम

लक्षणोपेत पुत्रको जन्म दिया । इस बालक के मुख पर सूर्य के समान तेज चमकता था । सूति का गृह इन्हीं बालक के तेज से देदिप्यमान हो रहा था । कमा शेठ के कुल में—मित्र मण्डल में असीम आनंद छा गया । शेठने बड़ा भारी जन्मोत्सव किया । अपने नगर के सैकड़ों याचक धनी कर दिये और वहां के राजा उदयसिंह से प्रार्थना करके या द्रव्य से जिस प्रकार होसका बहुत से कैदी कारागार से छुड़वा दिये ।

बालक दिन—प्रतिदिन बढ़ने लगा । सब लोग इसको देखकर आनंद में निमग्न होजाने लगे । जगत् के इस नये अतिथि के उत्तमोत्तम लक्षण और चेष्टाएं देख कर सामुद्रिक शास्त्री लोग कहने लगे कि—'यह बालक इस भूमंडल में जीवों को मोक्ष मार्ग को दिखाने वाला एक धर्म गुरु होगा' । पुत्र को उत्तम लक्षणों से विभूषित देख कर उसका नाम 'जयसिंह' रक्खा गया । अत्यन्त आश्चर्य को करने वाली प्रतिभा वाला यह बालक दिन पर दिन बढ़ने लगा । जयसिंह के उत्पन्न होने के बाद इस गांव की उन्नति अपूर्व ही रूप में होने लगी । अतएव यह बालक सारे नगर को प्रिय हुआ । यह 'जयसिंह' बालक जब पढ़ने के लायक हुआ, तब माता पिताने इस को शुभ मुहूर्त में बड़े महोत्सव पूर्वक पाठशाला में बैठाया । बुद्धिवान 'जयसिंह' बुद्धि के आधिक्य से उत्तरोत्तर अपूर्व विद्याओं की शिक्षा ग्रहण करता हुआ आगे बढ़ा । जब वह अपने अध्यापक से थोड़े समय में सम्पूर्ण विद्याओं को ग्रहण कर चुका तब उनके माता—पिता ने जयसिंह के विद्या गुरुका द्रव्यादिक से बहुत सत्कार किया ।

प्रिय पाठक ! देखिये क्या होता है ? जयसिंह अभी तो बाल्यावस्था में ही है । माता पिता की सेवा-भक्ति कुछ भी नहीं की है ।

पिता को एक पुत्र की लालशा थी, वह संपूर्ण पूरी होगई है। पिताने अभी तो पुत्रका सुख कुछ भी नहीं लिया है। केवल उस के मुखचन्द्र का दर्शन मात्र किया है। ऐसी अवस्था में 'कमा' सेठ क्या सोचते हैं? "मुझे एक पुत्र की इच्छा थी सो धर्म के प्रसाद से पूर्ण हुई है। पुत्र अवस्था के लायक होने आया है। अब मैं इस असार संसार को त्याग करके मोक्ष को देने वाली दीक्षा को ग्रहण करूं" देखिये! पाठक! कैसी संतोष वृत्ति है? उत्तम जीवों के तो यही लक्षण हैं?सेठ को इस असार संसार से विरक्तभाव पैदा हुआ।

एक दिन की वात है—'कमा' सेठ ने वड़ी गंभीरता के साथ अपनी धर्म पत्नी से कहा कि-" हे प्रिये! हे भार्ये! तुम्हें एक पुत्र हुआ है, अब तुम संतोष वृत्ति को धारण करो। मैं अब तुम्हारी अनुमति से तपगच्छनायक गुरुवर्य श्रीविजयदानसूरीश्वर के पास-दीक्षा ग्रहण करूंगा।" पति के यह वचन कोडांमदेवी को तड़ित पात समान लगे। इन वचनों को सुनकर सतीओं में शेखर समान कोडांमदेवी बोली कि—" हे स्वामिन्! हे ईश! जैसे विना चन्द्रमा की रात्रि सुख दायक हो नहीं सकती है, वैसे आपके विना अज्ञान में रही हुई मैं क्या करूंगी? मेरी क्या गति होगी? सतीओं को माता शरण नहीं है। पिता शरण नहीं है। पुत्र शरण नहीं है। और भाई भी शरण नहीं। किन्तु सतीओं के लिये तो एक पति ही शरण है। अतएव हे स्वामिन्! आप के साथ में हमारा भी मनुष्य जन्म का फल, तपस्या का आचरण ही होना उचित है। अर्थात यह प्राण प्रिय 'जयसिंह' बालक के साथ मैं भी आपके प्रसाद से आपके साथ में तपस्या और व्रत अंगीकार करूंगी"।

इस प्रकार के विलाप युक्त वचनों को सुन करके सेठ ने कहा कि "हे भार्ये! जैसे सर्प कंचुकी को छोड़ देता है वैसे ही मैं भी

गार्हस्थ्य को त्यागना चाहता हूं । इतना ही नहीं किन्तु यह विचार मेरा निश्चित है । हे प्राण प्रिये ! यह जयसिंह अभी बालक है, अत एव तू इसकी रक्षा कर और इसके साथमें तू घर में रह । जब यह बालक बड़ा होजाय तब तुझे दीक्षा ग्रहण करनी हो तो करना । अभी तेरे लिये यह अनुचित बात है ।

ऐसे वाक्यों के समझाने पर कोडीमदेवी ने अपने पतिको दीक्षा लेने की आज्ञा दी । इस समय में तपगच्छनायक श्री विजयदानसूरि जी स्तम्भ तीर्थ में बिराजमान थे । अब 'कमा' शेठ दीक्षा लेने के इरादे से नारदपुरी से शुभ मुहूर्त में रवाना होकर थोड़े दिनों में स्तम्भ तीर्थ गए । वहां आकर आचार्य महाराज से प्रार्थना की कि "हे प्रभो ! हे भट्टारक पूज्यपादा ! दीक्षादान से मुझे अनुग्रह करिये ! " तदनन्तर आचार्य श्रीविजयदानसूरीश्वर ने संवत १६११ की साल में शुभ दिवस में इनको दीक्षा दी । अब कमा श्रेष्ठी 'मुनि' हुए । खड्ग की धार की तरह चारित्र को पालन करने लगे । धर्म के मूल भूत विनय का सेवन करने लगे । और हृष्ट मन से पूर्व ऋषियों के सदृश 'साधु' धर्म का पालन करते हुए बिचरने लगे ।

एक दिन अपने भगिनीपति 'कमा' श्रेष्ठी ने 'दीक्षा ग्रहण की है' ऐसा सुन करके पल्लीपुर ( पाली ) नगर से 'श्रीजयत' नामके संघपति कोडीमदेवी को मिलने के लिये 'नारदपुरी' आए वहांपर कुछ रोज रहकर जयसिंह और उनकी माता कोडीमदेवी को वह श्रेष्ठी अपने घरपर लाए । मेरु की गुफा में जैसे कल्पवृक्ष और पर्वत की गुफा में जैसे केशरी सिंह निर्भय होकर रहता है, उसी तरह इस पल्लीपुर ( पाली ) नगर में 'जयसिंह कुमार' अपनी माता के साथ अत्यन्त हर्षित हो रहने लगे और नगर निवासियों को आनन्द देकर समय व्यतीत करने लगे ।

अब इस प्रकरण को यहां छोड़ करके दूसरे प्रकरण में प्रसंगानुसार श्रीमहावीर स्वामी की पाट परंपरा दिखाकर, आगे फिर इसी वार्ता का विवेचन किया जायगा ।

—— : ——

# दूसरा प्रकरण ।

—— :*: ——

( श्रीसुधर्मास्वामी से लेकर श्रीविजयदानसूरिपर्यन्त पाटपरंपरा और श्रीतपगच्छकी उत्पत्ति इत्यादि । )

प्रिय पाठक ! भगवान् श्रीमहावीर देव की पाट पर पहले पहल गणको धारण करने वाले, अहिंसा, सत्य, अस्तेय, ब्रह्म और अकिंचन रूप पांच महाव्रतों को प्रगट करने और पालन करने वाले श्रीसुधर्मा स्वामी हुए । तदनन्तर 'श्रीजम्बूस्वामी' हुए । इसके बाद प्रथम श्रुतकेवली 'श्रीप्रभवस्वामी' हुए । प्रभवस्वामी के बाद 'श्रीसय्यंभवसूरि' हुए । जिन सय्यम्भवसूरिके गृहस्थावस्था में 'श्रीशांतिनाथ भगवान् की प्रतिमा से मिथ्यात्वरूपी अन्धकार दूर होगया । इस पाट पर 'श्रीयशोभद्रसूरि' हुए । तदनन्तर 'श्रीसम्भूतिविजय आचार्य' और उवसग्गहरस्तोत्रसे मरकीकी व्याधि को दूर करने वाले 'श्रीभद्रबाहुस्वामी' हुए । यह दोनों गुरुभाई थे । इन्हों में श्रीसम्भूतिविजय पट्टधर जानना चाहिये । श्रीभद्रबाहुस्वामी गच्छ की सार-सँभाल करने वाले थे, अतएव दोनों के नाम पाट पर लिखे जाते हैं । इन दोनों के पाट पर अन्तिम श्रुतकेवली 'श्रीस्थुलीभद्र' हुए । श्रीस्थूलिभद्र स्वामी के बाद इनके मुख्य शिष्य आर्यमहागिरी और श्रीआर्यसुहास्ति के नामके दो प्रतिभाशाली पुरुष आठवीं पाट पर हुए । आठवीं पाट पर इन दोनों के होने के

बाद 'सुस्थित' और 'सुप्रतिबुद्ध' इस नामके दो आचार्य हुए। इन दोनों के द्वारा 'कौटिक' नामका गच्छ चला। क्योंकि ऐसा कहा जाता है कि इन्हों ने एक कोटि बार सूरिमंत्र का स्मरण किया था। यहां पर यह विचारणीय बात है कि श्रीहेमचन्द्राचार्य तो 'सुस्थित सुप्रतिबुद्ध' ऐसा अखंडित नाम वाले एक ही मुनिको मानते हैं। क्योंकि श्रीहेमचन्द्राचार्य प्रभुने अपने त्रिषष्ठिशलाका पुरुष चरित्र की प्रशस्ति में लिखा है कि:———

अजनि 'सुस्थितसुप्रतिबुद्ध' इत्यभिधयाऽऽर्यसुहस्तिमहामुनेः ।
शमधनो दशपूर्वधरोऽन्तिषद् भवमहातरुभञ्जनकुञ्जरः ॥१॥

अब गुर्वावली में तो दो अलग २ सूरि कहे हुए हैं। 'विजयप्रशस्ति' ग्रन्थकारने भी तदनुसार दो पृथक् नाम गिनाए हैं। इन कोटिक गच्छमें क्रमसे 'श्रीइन्द्रदिन्नसूरि' 'श्रीदिन्नसूरि' और 'श्रीसिंहगिरि' होने पर दशपूर्व धर 'श्रीवज्रस्वामी नाम के आचार्य तेरहवीं पाटपर हुए। इस वज्रस्वामीने बाल्यावस्थामें ही आचाराङ्गादि ग्यारह अंगों को निर्दम्भ हो के, पारिणामिकी बुद्धि से और पदानुसारिणी लब्धि करके कण्ठाग्र किये थे। श्रीवज्र स्वामी की ख्याति से इस जगत् में वज्र शाखा प्रसिद्ध हुई। इस वज्र शाखा की कीर्ति अद्यावधि लोगों में विद्यमान है। वज्रस्वामी के शिष्यों में मुख्य शिष्य 'श्रीवज्रसेन' गच्छ के नायक हुए। इन 'श्रीवज्रसेन' सूरि को 'नागेन्द्र', 'चन्द्र', 'निवृत्ति', और 'विद्याधर' नाम के चार शिष्य थे। इन चारों के नाम से चार कुल उत्पन्न हुए। जैसे कि—नागेन्द्रकुल, चान्द्रकुल, निवृत्तिकुल और विद्याधर कुल। इन चार कुलों में भी चान्द्रकुल जगत में बहुत प्रसिद्ध है। इस चान्द्रकुल के उत्पादक श्रीचन्द्राचार्य से अनुक्रम करके 'श्रीसामन्तभद्र सूरि', 'श्रीवृद्धदेवसूरि', 'श्रीप्रद्योतनसूरि', 'श्रीमान देवसूरि', श्रीमानतु-

मानौ सामयिकचातुर्यं व्यापृत्याभि निजपुटभेदनं प्रच्छन्नतया प्रस्थानमाशु समसूत्रयताम् । संजाततदुदन्तविज्ञानमात्रो निस्त्रिंशहृदयः स बौद्धाध्यापकः स्वदैवतमस्तकन्यस्तचरणयुगलादिनिमित्तानां ध्यायन् प्रकटितसाटोपकोपप्रचण्डज्वालाजालः स्वसधर्मिणस्तत्रत्यभूमिभृतः प्रभूतभटांस्तद्विनाशाय पृष्ठानुयायिनः प्रणिनाय । सुदूरासन्नमुपागतान् योधानुपलक्ष्य हंसः कनीयांसं बान्धवं शरणागतैकवत्सलस्य सविधस्थपत्तनाधीशस्य सूरपालाह्वस्य पृथिवीपतेः पार्श्वे झगिति प्रयातुम्, ततश्च तत्सहायतया गुरुपादौ प्रयाय निजाविनयविहितावमाननापराधं क्षमयितुमादिश्य, सहस्रयोधी प्रतिपन्थिभिः समं संगरसंगतोऽरातिसैन्यसंत्रासमासूत्रयन् प्रचुरशरोपनिपातेन तितउरिव जर्जरिततनुरुर्वरायां पेतिवानकरुणरिपुजनैर्निधनमानायितो नाकनारीमनोरथानपूरि ।

ज्यायसो बान्धवस्य निदेशं शिरोवतंसीचक्रिवांस्त्वरितंतरपदप्रचारेण निर्दिष्टनामधेयं धरित्रीधरं शरणीचक्राणः, परिपन्थिभटान् फालच्युतभक्ष्यपृष्ठधाविन इव दुष्टश्वापदाननुपदमायातान्, तदासादनाय व्यापादनाय च सामादिनीतिप्रधानान् प्रभूतानप्यनुलोम-प्रतिलोमोपायान् प्रयुक्तवतोऽपि शरणायातरक्षोपक्षेपदीक्षितेन क्षितिरक्षिणाऽवकेशिन इव फलवन्ध्यत्वमुपनीतान्, वञ्चनाचञ्चुचातुरीकैः कैश्चित् पुनर्बौद्धाधिपैर्विज्ञप्तेन तेन नरपतिना कथमपि प्रतिपन्ने पराभूतवधप्रतिश्रवे प्रमाणवादेऽपि विजयश्रियमाशिश्रियाणः, ततश्चित्रकूटं प्रति विहितप्रस्थानः, भूयोऽपि पृष्ठावलग्नान् प्रतिपक्षिणः सामयिककौशलेन विप्रतेरिवान्, महता भाग्योदयेन पवननिवहेनेवादभ्रदभ्रचक्रं विघ्नसंघातं विघटय्य समशकन् कथञ्चन गुरुचरणारविन्दमालिङ्गयितुं परमहंसः । हरिभद्रसूरिणा स्नेहभरेण परिरब्धश्च स्वीयाविनयापराधदुरितमिव प्रक्षालयन् निर्मुक्तमुक्तोपमाश्रुपयःपातः स प्रस्थानतः प्रभृति वृत्तान्तमुपक्रममाणो परमबान्धवकथावसानावसानमेव तद् ब्रुवन् जायमानगुरुतरदुःखभरेण स्थानमनवाप्नुवतेव स्फुटितहृदयः क्षणमपि भ्रातृवियोगमसहमान इव हंसमन्वयासीत्[1] ।

---

१ राजशेखरसूरयस्तु स्वविरचिते प्रबन्धकोषे—"रेखात्रयाङ्कस्तत्कण्ठश्चक्रे । 'बुद्धोऽय जातः' इति कृत्वोपरि पादो दत्तः । उपरि चटितौ । गुरुणा दृष्टौ । निषण्णौ तौ गुर्वास्यच्छायापरावर्तं दृष्ट्वा तत्कैतवं तत्कृतमेव मत्वा जठरपीडाभिषेण ततो निरक्रामताम् । कपालिकां लात्वा गतौ तौ चिराद् नायातौ विलोकापितौ न स्तः । राजाग्रे कथितम्—'सितपटौ उत्कटकपटौ तत्त्वं लात्वा यातः' । कपालिकानयनाय तत्पृष्ठे सैन्यमश्वं गतम् । दत्तदृष्टी द्वावपि सहस्रयोधौ तौ । ताभ्यां निहत राजसैन्यम् ।

विमलकुलोपलब्धात्मलाभयोर्विशुद्धश्रद्धानादिसिद्धिपद्धतिनिबद्धबुद्धिकयोर्विपश्चित्परिषत्परिभावकप्रबलप्रातिभप्रागल्भ्यमाबिभ्रतोर्भागिनेययोस्तयोरेकहेलयैव त्रिदशावासमासदतोस्तांस्तान् निरुपमगुणान् संस्मरतः सूरिवर्यस्य विभावितासारसंसारस्वरूपस्यापि महती शोकसन्ततिराविरासीत्, प्रादुरासीच्च प्रसङ्गस्यास्य सूत्रधारीभूयमाभेजानानां नितान्तनिस्त्रिंशाशयानां शाक्यानामुपरि, विज्ञातसर्वज्ञागमरहस्यस्यापि तस्य सततशीतलस्वभावेऽपि मानसे, अतिघृष्ट इव चन्दनविटपिनि, दारुणः कोपपावकः ।

लब्धास्पदमुद्भटकोपावेशमनिरुध्य, प्रत्युत हव्यवाहमिव हविषा, अन्यत्रोपयोगिनापि रिपुकुलमूलोन्मूलन-शल्योत्पाटनादिनीतिवाक्यकदम्बकेन यथा तथा स्वाकूतानुकूलीकृतेन विवर्ध्य विगतसंयमानुकम्पो हरिभद्राचार्यः शत्रूयितसुगताचार्यनिकन्दनं लक्षीकृत्य कथिततताथागतपराभूत्यर्थनिजगमनं गुरुमभिपृच्छ्य, असहाय एवारब्धितप्रवासः सूरपालक्षितिपालस्य राजधानीमवाप्य द्रुततरं नराधीशमभिगम्य वितीर्णार्हत्समयसंगताशीर्वादः कृतस्वनामनिवेदनपूर्वकं निजागमनप्रयोजनमेवमजिज्ञपत् ;—"राजन् ! शरणागतवज्रपञ्जरतामाकलयता, मम परमहंसाख्यमन्तेवासिनं परिरक्षता, तदर्थं च लक्षसंख्यमपि प्रतिपक्षिसौगतराजसैन्यमवगणयता भवता ख्यापितं स्वस्य विस्मयावहं नीत्यनुरक्तत्वम्, प्रशस्यतमं साहसिक्यम्, अनन्यसदृशं च भुजोर्जस्वित्वम् ; बाढं तद् विश्वसिमि, शास्त्रवादे बौद्धबुद्धान् विद्वज्जनाभिमतरीत्या विजेतुमिहागतस्य मेऽनुरूपं प्रबन्धं विधाय साहाय्यमाचरिष्यसि" इति । वाचमिमां कर्णपुटेन निपीय वाचंयमशक्तिमिव परीक्षितुं पृथिवीपतिरिदमुचितवचनसंदर्भमभ्यधात्—"कर्तव्यमिदमस्माकम्, भवद्विजये हि वयमेव विजिष्णवः; परमाशङ्केयं बाधते मम मानसं यदुत—'कथमिव महाबुद्धयः शलभा इव बहवो भवद्भिर्विजेतुं शक्याः शाक्याचार्याः ? अस्ति वा काचिद् युष्माकं तथाविधा शक्तिर्यया भवतामजय्यतायामेव शक्नोमि विनिश्चयं कर्तुम् ? ।' निर्वचनेऽस्य

---

उद्वृत्तनष्टैरुपराजं गत्वा कथित तत्तजः । पुनर्बहुसैन्यप्रेषः । दृष्टिमेलापकः । युद्धमेकः करोति । अपरः कपरिकापाणिर्नष्टः । हसस्य शिरश्छित्त्वा राज्ञे दर्शितं तैः । तेनापि गुरवे दत्तम् । गुरुराह—'किमनेन ? कपरिकामानय' । आयाता भटाः । रात्रौ चित्रकूटे प्राकारकपाटयोर्दत्तयोस्तदासन्ने सुप्तस्य परमहंसस्य शिरश्छित्त्वा तैस्तत्रार्पितम् । तेषां बौद्धानां तत्सूरेश्च संतोषः । प्रातः श्रीहरिभद्रसूरिभिः शिष्यकबन्धो दृष्टः" इति प्रत्यपीपदन् । "भोटदेशे बौद्धाचार्यसमीपे तौ गतौ, द्वावपीमौ च बौद्धैर्मारितौ" इति कश्चित् । ( Peterson Rep. 3 P. XXXV. )

पर्यनुयोगस्य, वाचंयमाधीशेन निजस्याम्बिकासांनिध्ये प्रतिपादिते ताथागतानां निस्त्रिंशता बाढं विज्ञातपूर्वी नृपतिस्तान् शिक्षयितुं लब्धावसरमात्मानं विनिर्णयमानः सहर्षं सूरेर्भीप्सितं प्रतिपद्य वाक्शक्तिविशारदं दूतमेकं बौद्धपुरे प्राहिणोत् । ततः प्रोषितस्त्वरितं तत्पुरमाप्नुवन् दूतः सुगतसुतगुरुमानस्य नरनाथाशयानुसारं निपुणप्रपञ्चं वचननिचयमिदमुच्चचार, "तत्रभवति भवति भूयिष्ठभक्तिको भूमान् सूरपालो मम वाचा भवन्तमिदं विज्ञपयति; दशबलदर्शनागतितामादधान आर्हतशासनं निषेवमाणः कश्चिद् विपश्चिद् मम नगरमध्यासीनः सन्नतनय विवादविद्याविशारदमात्मानमभिमन्यते, न मन्यते च तृणाय समस्तानपि भूमण्डलस्थान् प्रज्ञालान्, विशेषतश्च बौद्धाचार्यान्; अत्रभवति च भवति भुवनत्रयविश्रुतेऽपि भवति, अवाङ्मुखाधायीदमस्माकं यद्यापि वादिशब्दः श्रुतिसंचारं न जहाति, ततस्तथा कर्तव्यं कर्तव्यतामिदानीमश्नुते यथा स्वयमयमवाप्तपराजयो निर्नष्टप्राणतामाविशेत्, नापीत्थमन्यः कश्चन कदाचन प्रादुर्भावमाश्रयेत्" इति । कर्णावतीर्णमिदं प्रणीय प्रणीतगर्वसर्वस्वाङ्गीकार इव बुद्धप्रबुद्धधुरन्धरः स साक्षेपोत्क्षेपां वाणीमिमामजल्पत, "तिरस्कृतकृत्स्नविषयवर्तिविबुधव्रातस्य मम पुरः कोऽयं नवपठित इव जिनमतविशारदोऽपि वावदूको भविता ? नूनमनल्पविकल्पजल्पनकल्पनाभिरल्पेनैव कालेन बालायमानमिव मां तन्मानविनाशने विनिश्चिनुध्वमेनम् । परं स वदावदः स्वपराजये स्वयं परासुतां प्रतिज्ञास्यते नवा ? । प्रतिजानीत चेत्, सिद्धमवश्यमस्मत्समीहितम्, मत्कर्तृकस्य तत्पराभवस्य नियमेन जनिष्यमाणतया तन्निधनस्य तत्प्रतिज्ञयैवाभिमुखीकरिष्यमाणत्वात् । नो चेत्, कथं स नामावशेषतामापादनीयः, पराजयमात्रस्य तद्व्याप्यत्वाद्यभावेन तदापादयितुमपर्याप्तत्वात् ? इति त्वमेव प्रवरतरमन्विष्य तादृशं किञ्चनौपयिकमाख्याहि, येन तत्पराभूतस्य तस्य नियततया निधनं विनिश्चिनुयाम्' इति । वाक्प्रपञ्चविचक्षणस्तदुक्तमालोच्य समयोचितमभीप्सितार्थसंदर्भगर्भमाविर्भावितवान् निर्वचनमेतद् दौत्यभृतामग्रणीः,—" भगवन् ! श्रीनिधेर्भवतः पुरः कथमिवामुष्य मम मन्दधियो जनस्य गिरः प्रवृत्तिश्चारिमाणमावहेत् ? यदिवा, भवत्पदारविन्दप्रभावतो न किञ्चिद् दुष्करमिदमवधारये; मम मतौ स्फुरत्ययमविघ्नकार्यनिर्वर्तकस्तदुपायः, कर्तव्यतायां त्वस्य भवन्त एव प्रमाणम् । स चायम्, याचन्तां भूमिमन्तं भवन्तः "विवादे यः पराभवमनुभवतु, निष्टप्ततैलकुण्डे स्वयं स प्रवेशमनुतिष्ठतु" इति पणम् । स्वकार्यदर्शी स्वश्लाघाकारी च दूतोक्तिं प्रविभाव्य हृष्टमनाः शाक्याचार्यस्तत्प्रशंसां प्राणैः, निरणैष च तथा विधातुम् । चतुरमतिर्दूतोऽपि तन्निश्चयं दृढीकर्तुकामः प्रकाममत्र-

बीत्, "पुनरपि धार्ष्ट्यमवलम्ब्य विज्ञपयामि किञ्चिद् भगवत्पादौ, यद् हिरण्यगर्भेयं वसुन्धरा, संभवति चेह, जिनमतेऽपि कश्चिदतिशयितमतिरभियुक्तोऽस्तितामादधीत, यतो मा भूद् भवतामवमानना। यद्यपि गगनाङ्गणोद्भूतारविन्दमकरन्दायमाणमसदिदं परिकल्पनं मे, तथापि बाढमवधारणीयमिदं यदुत तत्रभवत्सु विजयिषु वयं सनाथतामाकलयामः" इति । शङ्कितनिजविजयमिव तमनुमाय सौगतगुरुः समादधात्, "आः किमेतद् भयं भवद्भृदयमनुरुणद्धि ? चित्रमदो यच्चिरनिषेवितेऽपि मयि परेण विजेयताया भ्रममुद्वहसि, क इव वाचस्पतिप्रतिमोऽपि प्राप्तरूपो मतङ्गज इव सिंहस्येव मम पुरः प्रगल्भः ? यदि तन्मदगदं न प्रतिकुर्वीय, स्वनामधेयमप्यहं तर्हि नाङ्गीकुर्वीय, किमत्राप्रस्तुतेनेव स्वयमभिष्टुतेन बहुना, अचिरेण भविष्यतेदंसंवादिना तत्पराजयेनैव निर्णेष्यसि सर्वम् : तत् प्रतिष्ठस्व शीघ्रम्, प्रशाधि च पुरपुतः पुरतो वादिपौरुषानलपटलादभ्राभ्रप्रतिमप्रतिभस्य मे वाचम्, वादिलाभाकृष्टास्तवानुपदमेव समागच्छामः" इति । एवं खगमननगकुसुमोद्गमप्रतिनिभं तद्वचनं निशम्य मुदितमानसो दौत्यकरो निजं पुरमायातः संविहितसुगतमतपतिव्यतिकरेण फलेग्रहिणा महीपतिमवर्धयत् । बौद्धाचार्योऽपि विपुलविद्वद्वृन्दार्चितचरणारविन्दस्त्रिचतुरदिनाभ्यन्तरमेव तत्रागत्य प्राङ्गनोनिर्णीतपणेन वादमुद्रामासूत्रयत, स्वशासनरक्षिणीं तारानाम्नीं देवीमपि गर्वेण विस्मृत्य, स्मृतामपि वा सद्यःशत्रुसंघातविघातिनीं तां विजानन्नसंस्मृत्य, चतुरङ्गमण्डितायां वादपरिषदि समेत्य च वादमुपचिकंसमानः पूर्वपक्षं क्षणक्षयसिद्धान्तसिद्धिविधायिनमग्रहीत् । "यत् सत् तत् क्षणिकम्, यथा जलधरः, सन्ध विश्वं विश्वम्" इत्यादि तत्साधनाय प्रमाणजालमुपन्यास्थत, पक्षधर्मत्वादिन्लिङ्गलक्षणानि समर्थयंस्तत्रासिद्धतादीनि हेतुदूषणानि निरास्थत्, समापञ्च वादिकर्तव्यम् । प्रतिवादितां परिगृह्य हरिभद्रसूरिरपि परपक्षदूषण-स्वपक्षसिद्धिलक्षणं निरुपचरितविजयस्वरूपमनुसरन्, तदुक्तमनूद्यानैकान्तिकत्वादिभिरपरिहर्तव्यनिबिडैर्दूषणैस्तत्साधनं निराकृत्य, निरन्वयक्षणिकसिद्धान्तेऽपि उत्तमर्णाधमर्णतादिव्यवहाराभावस्य लौकिकस्य, कृतनाशाविहितभोगप्रसङ्गप्रभृतेर्लोकोत्तरस्य, स्मृति-प्रत्यभिज्ञानाभावादेश्च तदुभयस्य वज्रप्रहारायमाणस्य दूषणसमुदयस्याभ्युपगमेन भृशं विदूष्य, विभूष्य च विपुलोपपत्तिभिरनेकान्तदर्शनम्, निरुत्तरीचकार सौगताचार्यम् । मौनमाशिश्रियाणश्च सः "पराभूतः" इति सभ्यादिभिर्विदितः पणोपनतं तप्ततैलकुण्डमाविक्षत् । एवं प्रतिदिनं निर्दिष्टशपथानुसारमेकैको बौद्धो बुद्धधौरेयो हरिभद्रसूरिणा निजानन्यपाण्डित्यबलेन पराभूतिं लम्भितः कथावशेषतामवापत् । यावत् पञ्चषास्त्रं-

स्तेन विजितान् पणवशेन यमसद्म समाश्रितांश्चानुभूतवति सौगतपक्षे मूर्तिमानिव शोकः समुद्भूत् । सर्वैरपि तैस्ताथागतैः संहत्य शासनाधिष्ठायिनी संस्मृत्य प्रत्यक्षीकृता महलोपालम्भेन च निजान्ववायविनाशनोदासीनतानिबन्धनमनुयुक्ता निर्दोषहंस-परमहंसव्यापादनपातकविपाकमेनमुपनस्थिवांसमुपदिशन्ती कथमपीतः कर्तव्यताविमूढैः कुशलपथनिर्देशमभ्यर्थिता हरिभद्रसूरिणा सह विवादं निषेधन्ती स्वस्वस्थानगमनमादिक्षत् । ततो देवीवागनुसारेण सर्वेऽपि सौगतविशारदा निजनिजमावासमयासिषुः, कटुकफलमपरच्छात्रविहननमुपगम्य मनसापि तत् प्रत्याख्यंश्च । इयतापि तस्य सूरेरुत्कटो कोपवह्निर्नोपशान्तिमशिश्रियत्, यावतान्यैरपीदृशैर्नीतिपथानुगामिभिः प्रकारैस्ताथागतविनाशमचिकीर्षीत् ।

इतश्च जिनभटसूरिर्निजेऽपि विनेये क्रोधतनूनपाद्विस्फूर्जितमीदृशं निशम्य करुणापरीतचेतास्तदुपकृतये मृदुवचनविधिमनुशिष्य शिष्यद्वितयीं समरादित्यचरित्रबीजभूतया गाथात्रितय्या, अपरया चान्वितां हरिभद्रसूरिनिकटमजीगमत् । यतिनावपि द्राक् सूरपालोर्वगपालपत्तनमवाप्य ख्यातयशसं सूरिमुपगत्य गुरुसंदिष्टमुपदिष्टवन्तौ प्रतिविषतरुफलोद्दाहारिणीनां गाथानामवधारणे गुरुनिदेशमचकथताम् । ताश्चेमाः;—

"गुणसेण-अग्गिसम्मा सीहाणंदा य तह पिआपुत्ता ।
सिहि जालिणि माइसुआ धण धणसिरिओ य पइ भज्जा ॥१॥
जय-विजया य सहोअर धरणो लच्छी य तहप्पई भज्जा ।
सेण-विसेणा पित्तियउत्ता जम्मम्मि सत्तमए ॥२॥
गुणचंद-वाणमंतर समराइच्च गिरिसेणपाणो य ।
एगस्स तओ मुक्खोऽणंतो अण्णस्स संसारो ॥३॥"

---

१ गुणसेनाऽग्निशर्माणौ सिंहाऽऽनन्दौ तथा पितापुत्रौ ।
शिखी जालिनी मातासुतौ धन्यो धन्यश्रीश्च पतिभार्ये ॥१॥
जयविजयौ च सहोदरौ धरणो लक्ष्मीश्च तथा पतिर्भार्या ।
सेन-विषेणौ पितृव्यपुत्रौ जन्मनि सप्तमके ॥ २ ॥
गुणचन्द्र-वानमन्तरौ समरादित्यो गिरिषेणप्राणश्च ।
एकस्य ततो मोक्षोऽनन्तो द्वितीयस्य संसारः ॥ ३ ॥

अयमत्र भावः-(१) गुणसेननाम्ना विश्रुतः कश्चिद् नरपतिः, कस्मिंश्चिद् नगरे, कदाचित् काले, वसुन्धरामन्वशात् । तस्मिन्नेव पत्तनेऽग्निशर्माभिधानः कोऽपि तापसो मासं मासमुपवसन्नवात्सीत् । उग्रतपस्वित्वेन तन्नाम समस्तेऽपि पुरभेदने प्रसिद्धिमभजत् । एकदा नरपतिस्तु मासोपवा-

सिन पारणकाय न्यममन्त्रत् । सोऽपि तदङ्गीकृत्य प्राप्ते पारणकादिने नृपतिप्रासादमगमत्, परं राज्ञस्तद्विस्मृततया स तत्र प्रवेशमाधातुं पारणकं च विधातुं नाशकत् । ततः प्रतीहारनिरुद्धः प्रत्यावृत्तः स्वनियममनुसृत्यान्यत्र पारणकमकृत्वैवापरं मासोपवासव्रतमारभत । अनुस्मृततज्ज्ञातिकरेण महीपुरन्दरेण भृशमनुतापमातन्वता स्वापराधं निन्दता क्षमितस्तपस्वी पुनर्निमन्त्रितः कुतश्चिद् निमित्तविशेषादसंजातपारणकविधिः क्षुधित एव प्रागिव प्रत्यावर्तिष्ट । पुनरप्येवमेव धराधवेनाचरितस्तत एव हेतोस्तादृश एव प्रतिन्यवर्तत । विस्फूर्जत्क्रोधधूमध्वजश्च स तापसो विनयावनतमपि याचमानमपि च क्षमां, क्षमापतिं प्रणिजिघांसुर्भूयोऽन्तर्वैरिभावमन्वभानमीत्, अकार्षीच्च ततो 'यदि स्याद् मे तपसः फलम्, राजानमेन परभवेऽपि व्यापादयितुं प्रभविष्णुर्भवेयम्' इति निदानम् । (२) एवं सकोप एवायुःक्षये ततश्च्युतोऽग्निशर्मा भुवनपतिनिकाये देवभूयमभविष्ट । राजापि गुणसेनो निमायान्तःकरणो निर्माय यथाशक्ति धर्मकृत्यं सौधर्मदेवलोकमभूषयत् । देवलोकात् कालं कृत्वा गुणसेनजीवः सिंहराजाह्व क्षितीशः समजनि, अग्निशर्मा च तस्यानन्दाह्वयपुत्रत्वेनोदपादि । स च पूर्वानुवृत्तवैरेणात्र पितृभूतमपि सिंहराजमवधीत् । (३) ततः स्वस्वकर्मानुकूलमग्निशर्म गुणसेनात्मानावनुक्रमं नरकं स्वर्गं चाधिगत्य ततश्च्युतौ जालिनी-शिखिनामानौ मातापुत्रभावेन समुदपत्साताम् । इहापि प्राक्तनकर्मानुभावेन माता सुतं विषप्रयोगतः परासुनामनैषीत् । (४) तदनन्तरं गुणसेनः पञ्चमं त्रिदिवमारुह्य धन्याह्वयेन श्रेष्ठित्वेन प्रादुरभूत्, अग्निशर्मा च द्वितीयनिरयमधिष्ठाय तत्स्त्रीत्वेन 'धन्यश्री' इति नाम्ना जनुर्गृहीत्वा प्राच्यवैरेण पतिं व्यपीपदत् ॥ १ ॥ (५) ततो गुणसेनजीवः सप्तमं त्रिविष्टपकल्पमध्यरुक्षत्, अग्निशर्मा पुनस्तृतीयस्यामथ पृथिव्यां प्राविक्षत् । द्वावपि ततो मनुष्यजन्मनि जय-विजयाभिधानाभ्यां सहोदर्यभूताम् । एतस्मिन्नपि भवे तत एव प्राचीननिमित्ताद् विजयो जयमाजघान । (६) गुणसेनजीवो जयभवाद् मृतिमवाप्तो नवमकल्पे स्वर्गसंपदः परिभुज्य धरणाह्वयः श्रेष्ठी बभूवान् अग्निशर्मणा ततश्चतुर्थश्वभ्रविपदः परिषह्य जातवत्या लक्ष्मीनाम्न्या तद्भार्यया प्राचिकाऽरातिभावतो निरणाशि । (७) ततश्च च्युतो द्वादशे स्वर्लोके गुणसेनजीवः, पञ्चमनरके चाग्निशर्मात्मा क्रमशः सुख-दुःखे अनुभूयाविवक्षितापान्तरालदेव नारकभवे सप्तमे मनुष्यजन्मनि सेन-विषेणनामानौ पितृव्यपुत्रतया समजनिषाताम् । अत्रापि विषमोदर्केणानुबद्धकोपेन विषेणेव विषेणः सेनं व्यपीपदत् ॥२॥ (८) सेनभवाद् गीर्वाणभोगभोजीभूय गुणचन्द्रनामविद्याधरीभूयमापन्नं गुणसेनात्मानम्, अग्निशर्मा विषेणजन्म परि-

" जेइ जलइ जलं लोए कुसत्थपवणाहओ कसायग्गी ।
त जुत्तं, न जिणवयणअमियसित्तोवि पज्जलमि ॥ १ ॥"

रहस्यमासां विचार्य गुणवनदवानलकल्पं दारुणविपाकं जन्मान्तरानुबन्धिनं क्रोधमवबोधन्, तदायत्तमात्मानं च विज्ञाय भृशमनुतप्तमनास्तत्क्षणमेव नृपतिमभिपृच्छ्य गुरोर्महोपकारितामामनन्नविलम्बितं गुरुचरणौ न्यपतत्, दुष्कृतमलं च प्रायश्चित्तेन व्यशुशुधत् ।

केचित् पुनरत्र 'परमहंसोदन्तानन्तरं प्रकटितप्रतिघप्रखरज्वालो हरिभद्रसूरिराकर्षणमन्त्रविद्यया चत्वारिंशदधिकां चतुर्दशशतीं बौद्धपण्डितान गगनमार्गेण विकृष्य तप्ततैलकटाहे प्रचिक्षिप्सन् यावद् निहन्तुमुद्यतोऽभवत्, तदानीं गुरुभिस्तद्विचेष्टितमुदर्कदारुणमवगतवद्भिस्तदुपशमसमर्थानि मृदुललितवचनानि, ताश्च समरादित्यवृत्तवर्णनप्रवणाः प्रस्तुतोपयोगिनीर्गाथा निर्ग्रन्थयुगेन प्रेषिताः, याभिरमृतनिषेकनिभाभिस्तत्कोपसप्तसप्तिरुपशान्तिमावहत्, संकल्पप्रायश्चित्ताय च तावत्संख्याकान् ग्रन्थान् निर्मातुं सूरिः प्रत्यज्ञास्त इति निवेदयन्ति ।

---

पूर्वोदितपापविपाकवशेन षष्ठनिरयनिलयातिथीभूय मर्त्यजन्मासाद्य ततो वानमन्तरजातीयक्षुद्रदेवभूयं गतोऽत्राप्यनुवृत्तवता पूर्वीयपरिपन्थिभावेन समपीपिडत् । (९) ततः शुभध्यानतः प्रच्युत्य गुणसेनचेतनोऽनुत्तरेऽनुत्तरविमानेऽपश्चिमां त्रिदशसंपदमनुभावितुमुदपादि, अग्निशर्मात्मा च ततो त्रिहितान्तरालनरजन्मा सप्तमे नरके दुःखस्य परां काष्ठामनिच्छयापि संचीर्णदुरितप्रेरितो भोक्तुमाविक्षत् । गुणसेनजीवः स्वर्गाद्‌द्वृत्त. समरादित्यनाम्ना क्षितिरक्षी संजातः, अग्निशर्मा च निरयाद् निर्गतश्चाण्डालडिम्भो गिरिषेणाख्ययाऽभवत् । अस्मिन् भवे समरादित्यो राजर्षिर्भूत्वा स्वमवैकान्तिकाऽऽत्यन्तिकसुखास्पदं मोक्षमुपजगन्वान्, श्वपाकरूपोऽन्नोऽग्निशर्मजीवश्च कोपातिविषमफलदृष्टान्तीभवन्ननन्त कालं संसारारण्यं पर्याटीत् ॥

१ यदि ज्वलति ज्वलँल्लोके कुशास्त्रपवनाहतः कषायाग्निः ।
तद् युक्तम्, न जिनवचनामृतसिक्तोऽपि प्रज्वलसि ॥ १ ॥

२ यथा चतुर्विंशतिप्रबन्धे राजशेखरसूरयः, "कोपः । तैलकटाहाः कारिताः । अग्निना तापितं तैलम् । १४४० बौद्धा होतु खे आकृष्टाः । गुरुभिर्वृत्तान्तो ज्ञातः । साधू प्रहितौ । ताभ्यां गाथा दत्ताः "गुण०.... । बोधः । शान्तिः । १४४० ग्रन्थाः प्रायश्चितपाद ( ? ) कृताः " इति । चतुस्त्र्यष्टैकवर्षे विरचितायां खरतरगच्छपट्टावल्याममृतधर्मगणिशिष्यः क्षमाकल्याणमुनिस्तु हरिभद्रसूरिप्रस्तावे–"तदैव पुनः श्रीहरिभद्रसूरिर्बभूव ।

इदानीं दर्शितप्रसङ्गान्यचरितानुपलम्भेन सूरिनिर्मितग्रन्थपर्यालोचनमवाप्तावसरम् । तत्र तत्प्रणीतप्रबन्धसंख्यायां मतत्रयमवगम्यते; केचित् 'चतुर्दश शतानि ग्रन्थानां प्राणायिषत' इति प्रत्यपीपदन्, 'चत्वारिंशदधिकानि तानि' इत्यपरे प्राचीकटन्, 'चतुश्चत्वारिंशदुत्तराणि चतुर्दश शतानि' इति चान्ये न्यवीविदन् । तत्राद्यं मन्तव्यं दर्श्यमानसूरयो ज्ञाप्यमानग्रन्थेषु नीचैर्निष्टङ्क्यमानोल्लेखैरभ्युपागच्छन्;—

(१) मुनिचन्द्रसूरयं उपदेशपदटीकायाम्,—"महत् प्रवचनवात्सल्यमवलम्बमानश्चतुर्दश प्रकरणशतानि चकार" इति ।

(२) वादिदेवसूरयः स्याद्वादरत्नाकरे;—"प्रकरणचतुर्दशशती-

स च जात्या ब्राह्मणः सर्वशास्त्रपारगः सन् प्रतिज्ञां चक्रे, 'यदुक्तस्यार्थमहं न वेद्मि, तच्छिष्यो भवामि' इति । तत एकदा साध्वीमुखादेकां गाथां श्रुत्वा तदर्थमनवबुध्यमानः प्रतिज्ञावशात् साध्वीदर्शितगुरुसमीपे व्रतं जग्राह । जैनशास्त्राण्यपि सर्वाण्यधीत्याचार्यत्वं प्राप्तः । तस्य हंस-परमहंसनामानौ द्वौ शिष्यौ । परशासनग्रहणार्थं बौद्धाचार्यसमीपं गतौ । तत्राध्ययनं कृत्वा स्वपुस्तकं गृहीत्वा स्वस्थानं प्रत्यागच्छन्तौ तौ 'जिनौ' इति ज्ञात्वा पश्चादागतैर्बौद्धैर्मारितौ । अथैतत्स्वरूपं विज्ञाय कोपाक्रान्तेन गुरुणा तप्ततैलपूरितं कटाहं स्थापयित्वा मन्त्रबलाच्चतुश्चत्वारिंशदधिकचतुर्दशशतबौद्धा आकर्षिताः । तदानीं याकिनीमहत्तरावचनैः कोपादुपशान्तेन गुरुणा बौद्धा मुक्ताः । ततः पापशुद्ध्यर्थमाकर्षितबौद्धप्रमाणानि १४४४ पूजापञ्चाशकादिप्रकरणानि कृतानि । एवंविधा हरिभद्रसूरयो जाताः" इत्युल्लिखति स्म ।

१ स्याद्वादरत्नाकरप्रणेतॄणां जगद्विख्यातानां गणव्यवस्थायां 'रामचन्द्र'-इतिनाम्नां वादिदेवसूरीणामिमे गुरवः । ११७४ विक्रमसंवत्सरेऽयं ग्रन्थस्तैर्व्यरचि, इति स्वयं तैरेव प्रान्तभागविनिर्दिष्टादस्मात् श्लोकत्रयादवसीयते—

"प्रायस्तत्सर्वसंतानभक्तिमान् मुनिनायकः ।
अभूत् श्रीमुनिचन्द्राख्यस्तेनैषा विवृतिः कृता ॥ ५ ॥
प्रकृता श्रीनागपुरे समर्थिताणहिल्लपाटके नगरे ।
अब्धि-मुनि-रुद्रसंख्ये वहमाने वैक्रमे वर्षे ॥ ६ ॥
साहाय्यमत्र परमं कृतं विनेयेन रामचन्द्रेण ।
गणिना, लेखन-संशोधनादिना शेषशिष्यैः ॥ ७ ॥

२ मुनिचन्द्रसूरिशिष्यत्वेनामीषामपि स एव द्वादशशताब्दीरूपः समयः, अन्यथा निरुपचरितगुरुशिष्यभावानुपपत्तेः, अनेकप्रमाणैः सटीकप्रमाणनयतत्त्वालोकालङ्कारप्रस्तावनायामस्माभिरेतस्य प्रपञ्चितत्वाच्च ।

समुत्तुङ्गप्रासादपरम्परासूत्रणैकसूत्रधारैरगाधसंसारवारिधिनिमज्जज्ज-न्तुजातसमुत्तारणप्रवणप्रधानधर्मप्रवहणप्रवर्तनकर्णधारैर्भगवत्तीर्थकरप्रवचनावितथतत्त्वप्रबोधप्रसूतप्रवरप्रज्ञाप्रकाशतिरस्कृतसमस्ततीर्थिकचक्रप्रवादप्रचारैः प्रस्तुतनिरतिशयस्याद्वादविचारैः श्रीहरिभद्रसूरिभिः"

(३) मुनिरत्नसूरयोऽममस्वामिचरित्रमहाकाव्ये प्रथमसर्गे;—

"स्तौमि श्रीहरिभद्रं तं येनार्हद्धीर्महत्तरा ।
चतुर्दशप्रकरणशत्याऽगोप्यत मातृवत् ॥ ९९ ॥

(४) श्रीप्रद्युम्नसूरयः समरादित्यसंक्षेपप्रशस्तौ;—

"यावद् ग्रन्थरथाश्चतुर्दशशती श्रीहारिभद्रा इमे
वर्तन्ते किल पारियात्रिकतया सिद्ध्यध्वयानेऽङ्गिनाम् ।
तावत् पुष्परथः स एष समरादित्यस्य मन्निर्मितः
संक्षेपस्तदनुप्लवः प्रचरतु क्रीडाकृते धीमताम् ॥ ६६ ॥"

(५) श्रीमुनिदेवसूरयः शान्तिनाथचरित्रे;—

---

१ एतद्विरचनावसरो ग्रन्थकर्त्रैव प्रशस्तावेवं प्रत्यपादि—
"एतद् विक्रमतो द्विपञ्चदिनकृद्वर्षे कृतं पत्तने
सम्यक् शोधितवान् नृपाक्षपटलाध्यक्षः कुमारः कविः ।
सद्वैयाकरणाग्रणीर्विधिरुचिः श्रीपूर्णपालो यशः-
पालो बालकविस्तथा मणमहानन्दौ च सभ्याग्रिमौ ॥ ३० ॥"

२ अदोविरचनानेहसं "वर्षे वारिधिपक्षयक्षगणिते श्रीवर्धमानस्थितिश्चक्रेऽमु" इत्येतत्प्रशस्तिप्रान्तभागोल्लिखेन तत्कृदेव १३२४ विक्रमवत्सररूपं स्पष्टमाचष्ट ।

३ यत्तु Dr. Peterson महाशयः (in I Rep. App. P. 4), समरादित्यसंक्षेपप्रस्तावनायां Dr. Jacobi पण्डितश्च
"यो वादीश्वरदेवसूरिसुगुरोर्मूलक्रमे सूरिणा
चक्रे श्रीमदनेन्दुना निजपदे तेनाप्रवृत्तश्रिता ।
काव्ये श्रीमुनिदेवसूरिकविना श्रीशान्तिवृत्ते कृते
श्रीप्रद्युम्नमुनीन्दुना रुचिशुचिः सर्गोऽगमत् सप्तमः ॥४०३॥"

इति ग्रन्थप्रान्तप्रोक्तानुसारेण 'एतत्कर्ता देवसूरिः' इति ज्ञापयतः; तद् भ्रान्तमाभाति, मुनिदेवसूरीणामेव (न तु देवसूरीणाम्) एतत्प्रणेतृत्वात्, दर्शितपद्येऽपि तदर्थस्यैव लाभात्, सूरिविशेषणे सति मुनिविशेषणस्याम्नायबाधितत्वेन कल्पयितुमयुक्तत्वात् । एतत्प्रणयनसमयश्च प्रद्युम्नसूरिसमानः, तेनैवैतच्छोधितत्वात् ।

"चतुर्दशशतग्रन्थग्रन्थनायासलालसम् ।
हारिभद्रं मनोहारिभद्रं भद्रं करोतु नः ॥ ४ ॥"

( ६ ) प्रभाचन्द्रसूरयः प्रभावकचरित्रे[१] :—
"पुनरिह च शतोनमुग्रधीमान् प्रकरणसार्धसहस्रमेष चक्रे ।
जिनसमयवरोपदेशरम्यं ध्रुवमिति सन्ततिमेष तां च मेने ॥२०५॥"

( ७ ) गुणरत्नसूरयः षड्दर्शनसमुच्चयस्य तर्करहस्यदीपिकानाम्न्यां वृहद्वृत्तौ—"चतुर्दशशतसंख्यशास्त्ररचनाजनितजगज्जन्तमहोपकारः श्रीहरिभद्रसूरिः" ।

( ८ ) कुलमण्डनसूरयो विचारामृतसंग्रहे—"धर्मसंग्रहणी-अनेकान्तजयपताका-पञ्चवस्तुको-पदेशपद-लग्नशुद्धि-लोकतत्त्वनिर्णय-योगबिन्दु-धर्मबिन्दु-पञ्चाशक-षोडशका-ऽष्टकादिप्रकारणानि चतुर्दशशतमितानि...श्रीहरिभद्रसूरिभिर्विरचितानि" ।

---

१ यच्च निर्णयसागरीयप्रभावकचरिते तत्कर्तुः 'चन्द्रप्रभसूरिः' इति नाम प्रमोधितम्, तत् तत्सम्पादकस्य "श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभाचन्द्रः सूरिरनेन" इति सुस्पष्टस्यापि प्रतिशृङ्गं विन्यस्तस्यापि च पद्यस्यानवबोधत एव । धर्मबिन्दुभाषान्तरकर्त्राऽपि सर्वत्र प्रभावकचरित्रकर्तृतया चन्द्रप्रभसूरिं निर्दिशताऽन्धानुसरणन्याय आचरितः ।

२ ग्रन्थनसमयं चास्य ग्रन्थकार एव तत्प्रशस्तौ
"वेदानलशिखिशशधरवर्षे चैत्रस्य धवलसप्तम्याम् ।
शुक्रे पुनर्वसुदिने संपूर्णं पूर्वर्षिचरितम् ॥ २२ ॥"
इति पद्येन १३३४ वर्षरूपं प्रत्यपीपदत् ।

३ एतदाचार्यसमयजिज्ञासायाः
"काले षड्-रस-पूर्ववत्सरमिते श्रीविक्रमार्काद् गते
गुर्वादेशवशाद् विमृश्य च सदा स्वान्योपकारं परम् ।
ग्रन्थं श्रीगुणरत्नसूरिरतनोत् प्रज्ञाविहीनोऽप्यमुं
निर्हेतूपकृतिप्रधानजननैः शोध्यस्त्वयं धीधनैः ॥ ६३ ॥"
इति तत्कृतक्रियारत्नसमुच्चयपद्यमेवोपशामकम् ।

४ ग्रन्थकार एवेदंग्रन्थग्रन्थनसमयमेवं विनिर्दिशति—
"निस्सीमातिशया जयन्ति सततं सौभाग्यभाग्याद्भुताः
सूरिश्रीगुरुदेवसुन्दरवरास्तेषां विनेयाणुकः ।
सूरिः श्रीकुलमण्डनोऽमृतमिव श्रीआगमाम्भोनिधे-
श्चक्रे चारुविचारसंग्रहमिमं रामाब्धिशक्राब्दके ॥ २ ॥"

(९) समयसुन्दरगणिशिष्यः श्रीहर्षनन्दनगणिर्मध्याह्नव्याख्यानपद्धतौ[1]

"पालित्तो वृद्धवादी कविकुलतिलकः सिद्धसेनो दिवाकृद्
विद्यासिद्धस्तथार्यः खपुटगुरुरुमास्वातिको मल्लवादी ।
सूरिः श्रीहारिभद्रः स्वपरसमयविद् बप्पभट्टिः प्रसिद्धः
सिद्धर्षिर्देवसूरिः कुमरनृपनतो हेमसूरिश्च जीयात् ॥१॥"

इतीमं महर्षिकुलकनाम्नो ग्रन्थस्य श्लोकं व्याकुर्वन् हरिभद्रपदव्याख्याने "हरिभद्रः श्रीवृद्धगच्छे चतुर्दशशतग्रन्थग्रन्थनतत्परः" इति व्याहार्षीत् ।

(१०) मणिभद्रः षड्दर्शनसमुच्चयलघुटीकायाम्[2]:— "इह हि श्रीजिनशासनप्रभावनाविर्भावकप्रमोदयभूरियशश्चतुर्दशशतप्रकरणकरणोपकृतजिनधर्मो भगवान् हरिभद्रसूरिः" ।

(११) जिनदत्तसूरयो गणधरसार्धशतकेः:—

"चउदससयपयरणगोनिरुद्धदोसो सया हयपओसो ।
हरिभद्दो हरियतमो हरिव्व जाओ जुगप्पवरो[3] ॥५५॥"

द्वितीयं मतं राजशेखरसूरयः प्रबन्धकोष एभिः शब्दैर्विनिरदिक्षन्-"१४४० ग्रन्थाः प्रायश्चिन्तपाद (?) कृताः" इति ।

तृतीयं पुनस्तदेतेऽबूबुधन्:—

(१) श्रीरत्नशेखरसूरयः श्राद्धप्रतिक्रमणार्थदीपिकाटीकायाम्[4];—
"१४४४ प्रकरणकृत्श्रीहरिभद्रसूरयोऽप्याहुर्ललितविस्तरायाम्"

---

१ ग्रन्थस्यास्य पूर्णत्वसमयो ग्रन्थकारशब्दैरवधार्यताम्:-

"त्रिक-सप्त-षडेकाब्दे अक्षततृतीयादिने ।
ग्रन्थोऽयं पूर्णतां प्राप्तः श्रीअणहिल्लपत्तने ॥ १ ॥"

२ एतस्य टीका सर्वराजगणिना व्यधायि । अग्रे ग्रन्थनामाटिप्पण्यां "Weber's Rep. II, P. 987" इति स्थलप्रदर्शनमप्यस्यामेव टीकायां किञ्चितान् ग्रन्थान् कक्षीकरोति, तत्रास्याष्टीकाया एवोल्लिखादिति ध्येयम् ।

३ चतुर्दशशतप्रकरणगोनिरुद्धदोषः सदा हतप्रदोषः ।
हरिभद्रो हततमा हरिरिव जातो युगप्रवरः ॥ ५५ ॥

४ "शर-गगन-मनुमिताब्दे ज्येष्ठामूलीयधवलसप्तम्याम् ।
निष्पन्नमिदं शास्त्रं श्रोत्रध्येत्रोः सुखं तन्यात् ॥ १ ॥

इति तदवसानांशतो निर्माणकालोऽस्य १४०५ स्पष्ट एव ।

५ एतस्य निर्मितेरवसरस्तस्मिन्नेव ग्रन्थे कर्तार एवमुपादिशन्;-
"एषां श्रीसुगुरूणां प्रसादतोऽब्दे षडङ्कविश्वमिते ।
श्रीरत्नशेखरगणिर्वृत्तिमिमामकृत कृतितुष्ट्यै ॥ ११ ॥"

( २ ) अञ्चलगच्छपट्टावल्याम्[१] "२६ श्रीहरिभद्रसूरिः १४४४ प्रकरणकर्ता" ।

( ३ ) क्षमाकल्याणमुनिः खरतरगच्छपट्टावल्याम्—"१४४४ पूजापञ्चाशकादिप्रकरणानि कृतानि" इति ।

( ४ ) श्रीविजयलक्ष्मीसूरय उपदेशप्रसादे[२] तृतीयस्तम्भे त्रयस्त्रिंशे व्याख्याने हरिभद्रसूरिचरितं व्यावर्णयन्तश्च ।

अस्तु मतत्रयेऽपि यत् किञ्चिद् मतमत्र प्रमाणम्, किन्तु त्रितयमप्येतत् सूरीणां चतुर्दशग्रन्थशतप्रणयनं न व्यभिचरति, इति हरिभद्राचार्यप्रणीतग्रन्थानां तावत्यामनन्यसदृक्षायां महासंख्यायां दृढमापन्नो निर्विवादं निर्णयः । एतावतीं च विस्तरवतीं संख्यामपेक्ष्य सांप्रतमुपलभ्यानां तेषां संख्याऽतीव न्यूनतामाबिभर्ति, अतिरिक्तानां ( उपलभ्यमानेभ्यः ) ग्रन्थानां राजापशदाविशदधर्मद्वेषजन्यात् प्रयोगात्, स्वभावोपनतविनाशस्वरूपाद् वा निमित्ताद् नामावशेषीभवनात्, नामतोऽपि बाह्यातताया आश्रयणात्, इति दुर्भाग्यविलसितमिदमस्माकं संभावयामः । तत्रोपलभ्यमाना इतस्तत आकर्ण्यमानाश्च त इमे;—

(१) अनुयोगद्वारसूत्रलघुवृत्तिः (२) अनेकान्तजयपताका स्वोपज्ञटीकासहिता ( ३ ) अनेकान्तप्रघट्टः ( ४ ) अनेकान्तवादप्रवेशः ( ५ )

---

१ ( See Bhandarkar's Rep. 1883-1884, Page, 320 )
२ अस्या रचनासमयः विक्रमात् १८३४ संवत्सरात्मकस्तदन्तभागे कर्त्रा निर्दिष्टः । ३ अस्यच १८४३ वैक्रमे वर्षे इति तत्प्रशस्तौ व्यक्तम् ।

[१] (See Weber's Rep. II, Page 987, I. 24) जैनग्रन्थावल्यां चास्या भाण्डागारद्वये सत्तायाः प्रतिपादक उल्लेखः । [२] मुद्रितेयं मूलरूपा सपूर्णा, टीकायुता च सा यशोविजयजैनग्रन्थमालायामंशतः । एनामनेकान्तमण्डनैकान्तखण्डनेऽप्रतीकाशां जगद्विख्यात-कलिकालसर्वज्ञश्रीहेमचन्द्राचार्योऽपि सिद्धहेमशब्दानुशासनबृहद्वृत्तौ "द्विहेतोरस्त्यणकस्य वा" ( २।२।८७ ) इति सूत्रे "साध्वी खल्वनेकान्तजयपताकायाः कृतिराचार्यहरिभद्रस्य हरिभद्रेण वा" इति विकल्पषष्ठ्युदाहरणमुपन्यस्यमानः प्राशंसत् । एतट्टीकाया विवरणमपि द्विश्लोकसहस्रमानं मुनिचन्द्रसूरिभिर्द्वादशशताब्द्यां विनिर्मितम् । [३] धर्मबिन्दुभाषानुवादपुस्तके तदनुवादकेन निर्दिष्टोऽयं ग्रन्थः [४] स्याद्वादनिरूपणप्रवणोऽयं ग्रन्थोऽनेकान्तजयपताकासंक्षेपरूपः । षड्दर्शनसमुच्चयटीकायां चतुर्थाधिकारप्रान्तभागे जैनन्यायग्रन्थनामनिर्देशेऽस्यापि स्मरन्ति श्रीगुणरत्नसूरयः । [५] एष ग्रन्थः जिने-

**अष्टकानि (६) आवश्यकनिर्युक्तेर्लघीयसी अथ च द्वाविंशतिश्लोक-सहस्रप्रमाणा ! टीका (७) तस्या एव चतुरशीतिश्लोकसहस्रमाना**

---

श्वरसूरिभिः १०८० वैक्रमे वत्सरे टीकया विभूषितः, तथा च तस्या एव प्रशस्तौ तत्कर्ता—

"पादाम्भोजद्विरेफेण श्रीजिनेश्वरसूरिणा ।
अष्टकानां कृता वृत्तिः सत्त्वानुग्रहहेतवे ॥ ३ ॥
समानामधिकेऽशील्या सहस्रे विक्रमाद् गते ।
श्रीजावालिपुरे रम्ये वृत्तिरेषा समापिता ॥ ४ ॥"

[६] प्रसिद्धा । यत्तु धर्मबिन्दुभाषानुवादे सूरिजीवनवृत्तान्ते तदनुवादकेन विदुषा मणिलालेन "पोते लखेली श्रीआवश्यकनिर्युक्तिनी बावीश हजार श्लोकनी टीकामां, आ प्रसंगने याद करीने "चक्कीदुगं" ए श्लोक (?) उपर सविस्तर वर्णन कर्युं छे, जे आनंद अने बोध साथे वांचवा योग्य छे" इति "स्वयं (सूरिणा) कृतायां श्रीआवश्यकनिर्युक्तेर्द्वाविंशतिश्लोकसहस्रमानायां टीकायां प्रसङ्गमेतं स्मृत्वा "चक्की-दुगं" इति श्लोकस्य (?) विस्तरेण वर्णनमकारि, यदानन्देन बोधेन च सार्धं योग्य पठितुम्" इत्यर्थकमुक्तम्; तत् किं निबन्धनमाश्रित्य ! इति नावगच्छामः, आस्माकीने तट्टीकापुस्तके तस्या गाथायाष्टीकायां तद्वृत्त-गन्धस्याप्यनुपलम्भात् । [७] एतत्सद्भावसाधकानि चात्र प्रमाणानि—

(१) वैक्रमे १६८१ तमे वर्षे समयसुन्दरोपाध्यायविरचितं सामाचारीशतकम् । (See Indian Antiquary Vol, XXIII, Page 174)

(२) अञ्चलगच्छपट्टावली, यस्यां "आवश्यकबृहद्वृत्तिः ८४००० सहस्रकर्ता, २२ सहस्री च" इत्युल्लेखः ।

(३) मलधारिहेमचन्द्रसूरिभिः प्रणीतं लघीयस्यास्तन्निर्युक्तिटीकायाष्टिप्पनकम् ।

(४) स्वयं ग्रन्थकर्तैव लघुटीकाया आदौ निजं बृहट्टीकाकर्तृत्वं स्मरयति; तथा च तस्या आदिभागः—

"यद्यपि मया तथान्यैः कृतास्य विवृतिः, तथापि संक्षेपात् ।
तद्रुचिसत्त्वानुग्रहहेतोः क्रियते प्रयासोऽयम् ॥ २ ॥"

अनुपलम्भोऽपि नास्या महाटीकाया इदानीन्तनः, विशेषावश्यकभाष्यटीकाकर्त्रा मलधारिहेमचन्द्रसूरिणा स्वीये तल्लघुटीकाटिप्पनके स्वसमयेऽपि तदुपलम्भाभावस्य प्रतिपादनात् ।

**बृहट्टीका ( ८ ) उपदेशपदानि ( ९ ) कथाकोशः ( १० ) कर्मस्तववृत्तिः (११) कुलकानि (१२) क्षमावल्लीबीजम् (१३) क्षेत्रसमासवृत्तिः (१४)**

---

[ ८ ] एतस्य प्राकृतगाथाबन्धनिबद्धस्य नामत एवावमेयविषयस्य ग्रन्थस्य मुनिचन्द्रसूरिभिर्विहिता टीकेदानीमुपलभ्यते, 'अन्यैरपि तत्पूर्वतनै-स्तस्य टीकाऽकारि' इत्यपि तट्टीकादिभागोपन्यस्तेनानेन श्लोकेनानुमीयते -

"पूर्वैर्यद्यपि कल्पितेह गहना वृत्तिः समस्त्यल्पधी-
लोकः कालबलेन तां स्फुटतया बोद्धुं यतो न क्षमः ।
तत्तस्योपकृतिं विधातुमनघास्तस्यापि तत्त्रानुगां
प्रीतिं संजनितुं सुबोधवचनो यत्नोऽयमास्थीयते ॥"

अन्त्यगाथाटीकायां च संक्षिप्तं प्रस्तुतसूरिचरितसंवादमपि समुपल-भामहे; स चायम्,—"केन ? इत्याह, हरिभद्राचार्येण, यः किल श्रीचित्रकूटाचलचूलानिवासी प्रथमपर्याय एव स्फुटपठितानेकव्याकरणः सर्वदर्शना-नुयायितर्ककर्कशमतिमतामग्रगण्यः प्रागज्ञातपरपठितग्रन्थानवबोधताच्छि-ष्यभाव आवश्यकनिर्युक्तिपरावर्तनाप्रवृत्तयाकिनीमहत्तराश्रयसमीपलब्ध— "चक्कीदुगं हरिपणगं" इत्यादिगाथासूत्रो निजनिपुणोहापोहयोगोऽपि कथमपि स्वयमनुपलब्धतदर्थस्तदवगमाय महत्तरोपदेशात् श्रीजिनभद्राचा-र्यपादमूलमवसर्पन्नन्तरा जिनबिम्बावलोकनसमुत्पन्नानुत्पन्नपूर्वबहलप्रमोदव-शात् समुच्चारित-"वपुरेव तवाचष्टे-"इत्यादिश्लोकः सूरिसमीपोपगताव-दातप्रव्रज्यो ज्यायसीं स्वसमय-परसमयकुशलतामवाप्य महत् प्रवचनवात्स-ल्यमवलम्बमानश्चतुर्दश प्रकरणशतानि चकार" इति । एतद्विधानकालश्च टीकाकृच्छब्दैरेव पूर्वमत्र विनिवेदितः [ ९ ] सर्वराजगणिना गणधरसार्ध-शतकटीकायामुपदर्शितः (See Weber's Rep. II, 987) [१०] धर्म-बिन्दुगूर्जरभाषानुवादकानिर्दिष्टनामा । ( ११ ) पत्तनभाण्डागारविशेषस्य हस्तलिखितसूच्याम् ( Bhand. Rep. 1883|84 P. 172. ) ( १२ ) एतच्च राजशेखरसूरिप्रबन्धकोशे हरिभद्रसूरिप्रबन्धे "समरादित्यचरित्रं नव्यं शास्त्रं क्षमावल्लीबीजं कृतम्" इत्युल्लेखे 'क्षमावल्लीबीजम्' इति समरादित्यच-रित्रस्य क्रोधदारुणोदर्कव्यावर्णनेन क्षान्तिवल्लरीबीजकल्पतया रूपकगर्भ विशेषणमनवबुध्यमानेन धर्मबिन्दुनुवादकेन पृथग्ग्रन्थरूपेण तत्र परिगणि-तमिति संभावयामः । (१३) Kielhorn Rep. P. 78, N. 397, Weber's Rep, II, P.987 (१४) (See Jain onomasticon by Dr. Klatt, Page 6) (१५) स एवायं ग्रन्थः, यं दृष्ट्वा बौद्धमतमादृतपूर्वी सिद्धर्षिरार्हतः समजनि, यदाह स एव निजोपमितिभवप्रपञ्चाकथायाः प्रान्ते:—

चैत्यवन्दनाभाष्यं संस्कृतम् (१५) चैत्यवन्दनावृत्तिः (ललितविस्तराख्या) (१६) जम्बूद्वीपप्रज्ञप्तिटीका (१७) जम्बूद्वीपसंग्रहणी (१८) जीवाभिगमलघुवृत्तिः (१९) ज्ञानपञ्चकविवरणम् (२०) ज्ञानादित्यप्रकर-

"आचार्यो हरिभद्रो मे धर्मबोधकरो गुरुः ।
प्रस्तावे भावतो हन्त स एवाद्ये निवेदितः ॥
विषं विनिर्धूय कुवासनामयं व्यचीचरद् यः कृपया मदाशये ।
अचिन्त्यवीर्येण सुवासनासुधां नतोऽस्मि तस्मै हरिभद्रसूरये ।
अनागतं परिज्ञाय चैत्यवन्दनसंश्रया ।
मदर्थेन कृता येन वृत्तिर्ललितविस्तरा ॥

श्रीशास्त्रवार्तासमुच्चयटीकायां श्रीयशोविजयोपाध्याया अपि "तदुक्तं ललितविस्तरायां ग्रन्थकृतैव" (पृ० ६-२) "भणितं च ग्रन्थकृता ललितविस्तरायाम्" (पृ० ३३-१) इत्यादिनैतस्या अस्मार्षुः । अस्याश्च टिप्पनकमपि मुनिचन्द्रसूरिभिर्विहितम् । एतदतिरिक्तापि चैत्यवन्दनवृत्तिर्ग्रन्थावली-धर्मबिन्दुगूर्जरानुवादयोरेतत्कर्तृका प्रतिपादिता । (१६) धर्मबिन्द्वनुवादकेन ग्रन्थस्यास्य प्रकृतसूरिविहिततयोल्लेखः किं प्रमाणमुपलभ्य कृत इति न ज्ञातुं शक्यते, तत्र प्रमाणानुपदर्शनात् । (१७) यत्प्रान्तस्थेयं गाथा (In the Peterson's third Rep. P. 284)

"सट्ठाइं गाहाए दसहिं दारेहिं जंबुदीवस्स ।
संघयणी सम्मत्ता रइया हरिभद्दसूरीहिं ॥ २८ ॥"

अन्यत्र पुनः (In Peterson's First Rep Page 89)

"इय संघयणी एसा जंबुद्दीवम्मि दसपयत्थाण ।
उद्धरियमयवईए रइया हरिभद्दसूरीहिं ॥ २८ ॥

इत्यर्थत एकापि शब्दतो भिन्नोपलभ्यते, अङ्कसादृश्यं च द्वयोरपि, इत्येक एव कर्ता भिन्नो वा ? विरहशब्दविरहाच्च प्रस्तुतादन्य एव हरिभद्रसूरिर्वा ? इत्यद्यापि संशयास्पदमेतत् । एतस्य टीका श्रीप्रभानन्दसूरिभिः १३९० तमे विक्रमाब्दे प्राणायि, यदाहुस्त एव तस्याम् ;-

"वित्ते श्रीकृष्णगच्छे श्रमणपरिवृढः श्रीप्रभानन्दसूरिः
क्षेत्रादेः संग्रहिण्या अकृत समयगैः सवदन्तीं सदर्थैः ।
एतां वृत्तिं खनन्दज्वलनविधुमिते विक्रमाब्दे चतुर्थ्यां
भाद्रस्य श्यामलायामिह यदनुचितं तद् बुधाः शोधयन्तु ॥२॥"

(१८) (See Dr. Weber's Rep. II, P. 987) जैनग्रन्थावल्यां च । (१९) विक्रमात् १६८६ वर्षे समयसुन्दरप्रणीतायां गाथासहस्र्याम् "इति ज्ञानपञ्चकविवरणप्रकरणं श्रीहरिभद्रसूरिकृतम्" इत्येवमेतज्ज्ञापकान्यक्षराणि (२०) प्राकृतगाथानिबद्धस्यास्य "नाणायत्तक"

**णम ( २१ ) तत्त्वतरङ्गिणी ( २२ ) तत्त्वार्थलघुवृत्तिः (२३) दर्शनशुद्धिप्रकरणम् ( २४ ) दर्शनसप्ततिका ( २५ ) दशवैकालिकावचूरी ( २६ ) दशवैकालिकबृहद्वृत्तिः ( २७ ) देवेन्द्रनरकेन्द्रप्रकरणम् (२८) द्विजवदनचपेटा ( २९ ) धर्मबिन्दुः (३०) धर्मलाभसिद्धिः (३१) धर्म-**

---

इति नाम राजशेखरसूरि: प्रबन्धकोषे, "नाणाइत्त" इति चापरत्र (Peterson's I Rep. Page 48) विलोक्यते, यस्यादिमेयमार्या–

"नमिऊण जिणं जगजीवबंधव धम्मकारणकरवट्टम् ( ? ट्टं ) ।
वोच्छं धम्मगइ ( ? ई ) णं धम्मविसेसं समासेण ॥ १ ॥"

इदमेव केचित् 'नानाचित्रक' शब्देन ( Weber's Rep. II, P. 987, l. 18, Klatt's Jain onomasticon P. 7 ) 'ज्ञानचित्रिका' नाम्ना चापरे (Peterson's Forth Rep. index P 134) जैनधर्मप्राचीनेतिहासकारकादयः प्रतिपन्नाः । (३१) खरतरगच्छीयैः कैश्चिदेतस्या हरिभद्रकृतत्वमाम्नायते, एतच्च धर्मसागरोपाध्यायः प्रवचनपरीक्षायां प्रत्यवैत्सुः ( See Bhanda. Rep. 1883/84 P. 152 ) ( ३२ ) संदिग्धप्रकृतहरिभद्रसूरिकर्तृकतया जैनग्रन्थावल्यादौ निर्दिष्टा । ( ३३ ) See Weber's Rep. II, P. 843 (३४) Weber's Rep. II, P. 987 । एतस्या एवापरनामत्वेन प्रतिभासमानायाः सम्यक्त्वसप्ततिकायाष्टीका सङ्घतिलकसूरिणा विरचिता । तेन च तट्टीकायामादौ " प्रकटीकृतामृतायमानसद्रुपदेशसारः कश्चित् पूर्वाचार्यः···· सम्यक्त्वसप्ततिकाभिधानशास्त्रारम्भे···· प्रथमगाथामाह" इति प्रस्तुवता न निर्दिष्टं कर्तृविशेषनाम, सामान्येनैव चोपदिष्टं तत्, इति बलवत्प्रमाणमपेक्षतेऽत्र तयोर्ग्रन्थयोरैक्यम्, तत्कर्तृत्वविनिश्चयश्च । ( ३५ ) इमामेव लघुवृत्तिनाम्ना परिभाषन्ते, प्रसिद्धा मुद्रिता चेयम् । ( ३६ ) विख्याता प्रकटिता च ( ३७ ) एतदपि प्राकृतगाथानिबद्धं मुनिचन्द्रसूरिभिष्टीकया विभूषितम् (Deccan College Catalogue, P. 209, N. 178) ( ३८ ) अस्या एव " वेदाङ्कुश " इति द्वितीय नाम प्रतीयते (See Bhau Daji mem. P. 143 ) ( ३९ ) अस्य सूत्रपद्धतिमलङ्कुर्वतो ग्रन्थस्य मुनिचन्द्रसूरिभिष्टीकापि प्राणायि । सटीकोऽप्ययं प्रसिद्धो मुद्रितश्च । (३०) Weber's Rep. II, P. 987, l. 20-1. (३१) अन्ययोगव्यवच्छेदद्वात्रिंशिकायाः स्याद्वादमञ्जरीटीकायां मल्लिषेणसूरयः पञ्चमश्लोकव्याख्याने "तथा च धर्मसंग्रहण्यां श्रीहरिभद्राचार्यपादाः" इति स्मरन्त्येताम् । एतस्या दशश्लोकसहस्रप्रमिता टीका मलयगिरिसूरिभिर्विहिता । टीकाकृतां कालश्च स्वयमेव तैः स्वव्याकरणे मलयगिरिव्याकरणनाम्ना विश्रुते "अरुणदरातीन्

संग्रहणी (३२) धर्मसारमूलटीका (३३) धूर्ताख्यानम् (३४) नन्द्यध्ययनवृत्तिः (३५) न्यायप्रवेशसूत्रवृत्तिः (३६) न्यायविनिश्चयः (३७) न्याया-

---

कुमारपाल:" इति दश्यार्थत्यादिविभक्त्यन्तमुदाहरणमुपन्यस्यद्भिः कुमारपालसमानसमय आवेदितः। सटीकोऽप्ययं ग्रन्थः प्रसिद्धः। (३२) 'मलयगिरिसूरिः स्वस्यां प्रज्ञापनाटीकायामेतस्य ग्रन्थस्योल्लेखं करोति' (See Weber's Rep. II, P. 572, 1. 12, fr. b. (३३) Decc. Coll. P. 147, N. 407. (३४) यदाह नन्द्यध्ययनबृहट्टीकायां श्रीमान् मलयगिरिराचार्यः–

"मध्येसमस्तभूपीठं यशो यस्याभिवर्धते ।
तस्मै श्रीहरिभद्राय नमष्टीकाविधायिने ॥ २ ॥"

[३५] अस्य न्यायप्रवेशसूत्रनाम्नो दिङ्नागाचार्यकृतस्य बौद्धमतानुमानप्रमाणमन्तव्यप्रतिपादनपरस्य ग्रन्थस्य टीकामेव प्रकृताचार्यो विहितवान्, इति तेनैव तदादिनिबद्धेन–

"सम्यङ्न्यायस्य वक्तारं प्रणिपत्य जिनेश्वरम् ।
न्यायप्रवेशकव्याख्यां स्फुटार्थां रचयाम्यहम् ॥ १ ॥
रचितामपि सत्प्राज्ञैर्विस्तरेण, समासतः ।
असत्प्राज्ञोऽपि संक्षिप्तरुचिसत्त्वानुकम्पया ॥ २ ॥"

इति पद्यद्वितयेन विनिश्चीयते। एतेन जैनग्रन्थावली-धर्मबिन्द्वादौ प्रतिपन्नं मूलटीकाद्वयकर्तृत्वं हरिभद्रसूरेश्चिन्त्यम्, स्वोपज्ञटीकात्वे 'सत्प्राज्ञैर्विस्तरेण रचितामपि' इत्युक्तस्यानुपपत्तेः। प्रान्तभागश्लोकटीकातश्चापि तदयुक्तम्; तत्र हि–

"पदार्थमात्रमाख्यातमादौ दिङ्मात्रसिद्धये ।
यात्र युक्तिरयुक्तिर्वा सान्यत्र सुविचारिता ॥ १ ॥"

इत्ययं मूलग्रन्थस्य श्लोकः। अत्र चतुर्थपादस्थस्य 'अन्यत्र' शब्दस्य टीकां विदधता 'अन्यत्र–प्रमाणसमुच्चयादौ' इति दिङ्नागाचार्यकृतस्य प्रमाणसमुच्चयस्योल्लेखो व्यधायि; स्वकर्तृकत्वे तु मूलस्य, स्वप्रणीतग्रन्थवचनमेवात्र वक्तव्यं स्यादिति। टीकायाश्चान्ते न्यस्तस्य–

"न्यायप्रवेशकं यद् व्याख्यायावाप्तमिह मया कुशलम् ।
न्यायाधिगमं सुकरं संलभतां भव्यो जनस्तेन ॥ १ ॥"

इति श्लोकस्य विरहाङ्काङ्कितत्वाभावेऽपि तदन्ते प्रतिपादितात् "समाप्ता चेयं शिष्यहिता नाम न्यायप्रवेशकटीका, कृतिः सिताम्बराचार्यजिनभट्ट[१ट]पादसेवकस्याचार्यश्रीहरिभद्रस्य" इत्युल्लेखात् तत्कर्तृकत्वमेव निःसंश-

यमवगम्यते । टीका चेयं पार्श्वदेवगणिना पञ्जिकया विभूषयांबभूवे, यस्या अयमादिमो भाग इहोपयुक्तः–

"दुर्वारमारकरिकुम्भतटप्रभेद-
कण्ठीरवं जिनपतिं वरदं प्रणम्य ।
न्यायप्रवेशकमिति प्रथिते सुशास्त्रे
प्रारभ्यते तनुधियापि हि पञ्जिकेयम् ॥१॥"

.......हरिभद्राख्यः सूरिर्न हि न शिष्ट इति न्यायप्रवेशकाख्यशास्त्रविवरणकरणप्रवर्तमान इष्टदेवतानमस्कारार्थं.......श्लोकद्वयं चकार "सम्यगित्यादि" इति । अन्ते च पञ्जिकाकार एव–

"न्यायप्रवेशशास्त्रस्य सद्वृत्तेरिह पञ्जिका ।
स्वपरार्थं दृब्धा स्पष्टा पार्श्वदेवगणिनाम्ना ॥ १ ॥
प्रहरसरुद्रैर्युक्ते विक्रमसंवत्सरे तु राधायाम् ।
कृष्णाया च नवम्या फाल्गुनमासस्य निष्पन्ना ॥ २ ॥

इति वृत्तद्वयेन स्वाभिधान-विधानकालादिकमजिज्ञपत् । (३६) धर्मबिन्द्वनुवादकेन निर्दिष्टः । (३७) प्रबन्धकोषे राजशेखरसूरिर्नामग्राहमेतां निरदिक्षत् । (३८) एतन्नामानि प्रकरणान्यन्यैरपि श्रीअभयदेवसूर्यादिभिः कृतानि स्मर्यन्ते, प्रस्तुतकर्तृकृतं चाप्याम्नायते। (३९) प्रबन्धकोषे तत्कर्त्रा सूरिकर्तृकत्वेनावाचि । (४०) प्रसिद्धोऽयं ग्रन्थः, मध्याह्नव्याख्याने हर्षनन्दनगणिरपि "हरिभद्रसूरिकृतपञ्चवस्तुटीका" इत्युदलिखत् । (४१) एतस्य टीकापि मलयगिरिणा विहिता । सुप्रसिद्धोऽयं ग्रन्थः । (४२) धर्मबिन्दु-गूर्जरभाषाविधायकस्तु स्वोपज्ञवृत्तियुक्तं ग्रन्थमिमं प्रस्तुतसूरिकर्तृकं वेदयति; एतच्चायुक्तमुत्पश्यामः, तट्टीकाया अन्ते "कृतं चिरन्तनाचार्यैः, विवृतं च याकिनीमहत्तरासूनुश्रीहरिभद्राचार्यैः" इति स्पष्ट तदन्याचार्यकृतमूलत्वोल्लेखासादनात् ( See Peterson third report, P. 293 (४३) मध्याह्नव्याख्यानस्थेन " अन्यैः श्रीहरिभद्रसूरिप्रमुखैर्द्वादशधाऽयमुक्तः श्रीपञ्चस्थानके—

उक्कोस सट्ठि पन्ना चत्ता तीस दसट्ठ पण दसग ।
दस-नव-ति-दु-एगद्धं च जिणुग्गह बारसविभेय ॥"

इत्युल्लेखेन संभाव्यमानमिदम् । (४४) एतद् नवाङ्गवृत्तिकारिणाऽभयदेवसूरिणा टीकया समलमकारि । टीकाविधानस्थलसमयादि तत्कृदेव

**(४४) पञ्चाशकम् (४५) परलोकसिद्धिः (४६) पिण्डनिर्युक्तिवृत्तिः (४७) प्रज्ञापनाप्रदेशव्याख्या (४८) प्रतिष्ठाकल्पः (४९) बृहन्मिथ्यात्वमन्थनम् (५०) मुनिपतिचरित्रम् (५१) यतिदिनकृत्यम् (५२) यशोधरचरित्रम् (५३) योगदृष्टिसमुच्चयः (५४) योगबिन्दुः (५५) योगशतकम्**

---

"चतुरधिकविंशतियुते वर्षसहस्रे शते च सिद्धेयम् ।
धवलक्कपुरे वसतौ धनपत्योर्बकुलबन्दिकयोः ॥
अणहिल्लपाटकनगरे संघवरैर्वर्तमानबुधमुख्यैः ।
श्रीद्रोणाचार्यैर्विद्वद्भिः शोधिता चेति ॥"

इति श्लोकयुग्मेन स्वयमाख्यत् । ये पुनर्दशमश्रावकविधि ( Indian Antiquary, Vol XXIII, P.194) दीक्षाविधि (Peterson forth Rep. P. CXXXIX) चैत्यवन्दनविधि ( Peterson I Rep. App. P.16, N.25) प्रभृतिनामभिस्तत्र तत्रावेदिताः प्रस्तुतसूरिकर्तृकतया ग्रन्थाः, तेऽस्यैव ग्रन्थस्य विभागरूपाः समवसेयाः । एकोनविंशतिपञ्चाशकयात्मन्यस्मिन् ग्रन्थे श्रावकधर्मविधिपञ्चाशकाह्वयस्य प्रथमपञ्चाशकस्य चूर्णिरपि चन्द्रसूरिशिष्यैः पाक्षिकसूत्रवृत्तिकर्तृभिर्यशोदेवसूरिभिर्निरमायि, यस्यां स्वसमयादिविभावकमिमं गाथानिचयं तत्कर्ता न्यवीविशत्;–

"मंदमईण हियत्थं एसा चुन्नी समुद्धिया सुगमा ।
सिरिचंदकुलनहंगणमयंकसिरिचंदसूरीण ॥ २ ॥
सिरिवीरगणिमुणीसरबंधुरसिद्धंतसिंधुमिस्साणं ।
अह्नी सिवमाणेहिं सिरिमज्जसएवसूरीहिं ॥ ३ ॥
नयण-मुणि-थाणुमाणे काले विगयम्मि विक्कमनिवाओ ।
संपियाय (?) एसा विबुहेहिं समयनिउणेहिं ॥ ४ ॥"

(४५) Weber's Rep. II, P.987 (४६) अपूर्णाभूतेयं वीराचार्यैः परिपूर्तिमनायि ( See Kilhorn Rep. P. 27) (४७) यदाह प्रज्ञापनाटीकायां मलयगिरिसूरिः;–

जयति हरिभद्रसूरिष्टीकाकृद् विवृतविषमभावार्थः ।
यद्वचनवशादहमपि जातो लेशेन वृत्तिकरः ॥

(४८) Weber's Rep. II, P. 987 (४९) Weber's Rep. II, P. 987 (५०) Peterson First Report, P. 128, N. 314 (५१) जैनग्रन्थावल्यामुपात्तम् (५२) Weber's Rep. II, P. 1064 (५३) श्रेष्ठिदेवचन्द्रलालभाईजैनपुस्तकोद्धारे द्वादशाङ्करूपेण मुद्रितः (५४) जैनधर्मप्रसारकसभया मुद्रितः सटीकः, टीकाकर्तृश्चाख्याऽद्य यावदनिर्णीता (५५)

(५६) योगविंशतिः (५७) लग्नशुद्धिः (५८) लघुक्षेत्रसमासः (५९) लघुसंग्रहणी (६०) लोकतत्त्वनिर्णयः (६१) लोकबिन्दुः (६२) विंशिका (६३) वीरस्तवः (६४) वीराङ्गदकथा (६५) वेदबाह्यतानिराकरणम् (६६) व्यवहारकल्पः (६७) शास्त्रवार्तासमुच्चयः स्वोपज्ञटीकासहितः (६८) श्रावकप्रज्ञप्तिवृत्तिः (६९) श्रावकधर्मतन्त्रम् (७०) षड्दर्शनस-

---

प्रबन्धकोषे राजशेखरसूरिरेतस्यास्मरत् (५६) धर्मबिन्दुगौर्जरानुवादकर्त्रा निर्दिष्टनाममात्रः (५७) विचारामृतसंग्रहादौ कुलमण्डनसूर्यादिभिः प्रत्यपादि । अन्यत्र ( Peterson I Rep. P. 88 ) 'लग्नकुण्डलिका' शब्दवाच्य एतत्कर्तृको ग्रन्थो दृश्यते, यस्येयमादिमाऽऽर्या–

"अवितहसव्वाएसं नमिउं चउवीसमं जिणवरेसुम् ( ? सं ) ।
वुच्छामि समासेणं लग्गं गुरूवएसेणम् ( ? णं ) ॥ १ ॥"

द्वयोश्चैतयोर्लग्नशुद्धि-लग्नकुण्डलिकाभिधयोः पार्थक्यमैक्यं वाऽर्थतः ? इति विशिष्टप्रमाणोपलम्भोपलभ्यम् । (५८) क्षेत्रसमासवृत्तेरतिरिक्तत्वेऽस्य धर्मबिन्दुभाषानुवादोल्लेखाद् नातिरिक्तं प्रमाणम्, इति स एव ( अनुवादोल्लेखः) प्रमाणाऽप्रमाणतया विमर्श्यः (५९)नेय जम्बूद्वीपसंग्रहिणीतोऽन्यतिरिक्ता (६०)तत्कर्तृकत्वेन प्रसिद्धो मुद्रितश्चायम् (६१) Weber's Rep. II, P. 987 ( ६२ ) दाक्षिणात्यराजकीयप्राचीनपुस्तकसंग्रहे ( Deccan College Library ) एतद्ग्रन्थावलोकनसौभाग्यं मया प्राप्तम् । प्राकृतभाषात्मकोऽयं ग्रन्थः, प्रत्येकं विंशतिं गाथाः संकलयत्सु विंशतौ प्रकरणेषु विभक्तश्च । संभावयामि, योगविंशतिनाम्नाऽस्यैव निर्देशः कृतः स्यादिति (६३) यस्यान्तभागे " सुत्तं वंदे मयणाविरहं तस्स नाहंपि वीर " इति विरहाङ्कोपलब्धिरिति तत्कर्तृकोऽयं धर्मबिन्द्वनुवादयित्रा परिगणितः (६४) ग्रन्थावल्यादौ तत्कर्तृभिः संशयितनिर्मातृप्रस्तुतहरिभद्राचार्यक उपदिष्टः (६५) Peterson Collection 1882–83 P. 126, N. 129 (६६) धर्मबिन्दुगूर्जरवागनुवादकः स्वानुवादपुस्तके निवेदयति स्मैनम् (६७) यशोविजयगणिकृतया टीकया सहितः प्रकाशितः । स्वोपज्ञटीकापि सुप्रसिद्धा ( ६८ ) समयसुन्दरगणिः सामाचारीशतके हरिभद्रसूरिकर्तृकतयेमामदर्शत् । जयसोमसूरिणा विचाररत्नसंग्रहे "सावयपन्नत्तिसुत्तवृत्तिः" इत्युल्लिखता मूलग्रन्थस्यास्य प्राकृतत्वं विभावितम् । एतेन धर्मबिन्दुश्रावकविषयांशादस्य भेदः साधितो भवति । इयं च प्रबन्धकोषे "श्रावकप्रज्ञप्तिः" इति नाम्ना प्रस्तुताचार्यनिर्मिततयाधिकृताद् ग्रन्थाद् भिन्ना नवा ? इति पर्यालोचनं न विशिष्टापरप्रमाणमन्तरेण निर्णयमाविशति (६९) एतस्य मानदेवसूरिकृतवृत्त्याऽन्वितस्योल्लेखः ( See Decc. Coll.

मुच्चयः (७१) षड्दर्शनी (७२) षोडशकम् (७३) संकितपञ्चाशी (७४) संग्रहणीवृत्तिः (७५) संपञ्चासित्तरी । (७६) संबोधसित्तरी । (७७) संबोधप्रकरणम् । (७८) संसारदावास्तुतिः (७९) संस्कृतात्मानुशा-

---

Catalogue, P. 209, N. 178) (७०) गुणरत्नसूरिणा, मणिभद्रेण च विदुषा क्रमशो बृहत्या लघ्व्या च टीकयाऽयं विभूषितः । द्वाभ्यामपि पृथक् पृथग् मुद्रितः । गुणरत्नसूरिसमयः प्रागेवात्र निदर्शितः, मणिभद्रस्य तु स विनिर्णेतव्यकोटिमुपढौक्यते (७१) प्रमाणमन्तरेण धर्मबिन्द्वनुवादकदर्शितेयं 'भीमो भीमसेनः' इति न्यायमननुरुन्धतः षड्दर्शनसमुच्चयाद् भिद्यत इति नानुमन्तुं शक्नुमः ( ७२ ) श्रेष्ठिदेवचन्द्रलालभाईजैनपुस्तकोद्धारे मुद्रित एष ग्रन्थः । अमुष्य श्रीयशोभद्रसूरिणा, श्रीमद्यशोविजयोपाध्यायेन च टीके अपि व्यधायिषाताम् ।

(७३-७५-७९) Bhau Daji, Mem. P. 25, 24 and 42-43. (७४) Weber's Rep. II, 987 (७७) राजनगरे मुद्रितम् । (७८) प्रसिद्धा, भूयः प्रतिक्रमणसूत्रे मुद्रिता च । गाथाचतुष्टयरूपेयं 'कर्त्रा पर्यवसानसमये विहिता' इत्याम्नायः । (७९) Weber's Rep. II, 987. (८०) तदेवेदम्, यत्र निजकोपप्रशमनाय गुरुभिः ( जिनभटसूरिभिः ) प्रेषितासु पूर्वमत्रैव दर्शितरूपासु "गुणसेण-अग्गिजम्मा" इत्यादिषु चतसृषु गाथासु प्रथमगाथात्रयेण बीजायितम्; संवदति चैतत् प्रभावकचरित्रमपि—

"मनसि गुरुविरोधवर्धिगाथात्रितयमिदं गुरुभिर्गुरुप्रसादात् ।
प्रहितमभिसमीक्ष्य सैष पूर्वं स च समरार्कचरित्रमाततान ॥"

एतच्चरित्रं कविचक्रचूडामणिर्धनपालस्तिलकमञ्जर्यामेवमभिष्टौति—

"निरोद्धुं तीर्यते केन समरादित्यजन्मनः ।
प्रशमस्य वशीभूतं समरादित्यजन्मनः ॥ २९ ॥"

कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यगुरवः श्रीदेवचन्द्रसूरयोऽपि निजे शान्तिनाथचरिते प्राहुः—

"वंदे सिरिहरिभद्दं सूरिं विउसयणणिग्गयपयावं ।
जेण य कहापबंधो समराइच्चो विणिम्मविओ ॥"

इदमेवाश्रित्य प्रद्युम्नसूरिभिर्विक्रमाद् १३२४ तमे संवत्सरे "समरादित्यसंक्षेपः" संस्कृतभाषया श्लोकबद्धो निबद्धः, यत् त एव तत्र प्रतिसर्गमचकथन् पद्यमेकमुपनिबध्नन्तः । एतस्य सुमतिवर्धनगणिभिष्टिप्पनकमप्यकारि ( Peterson Fifth Rep. P. 305 ) (८१) जैनग्रन्थावल्यादौ निरदेशि । अनेकान्तजयपताकाटीकायामेतदनुपातीनिमान्यक्षराणि—"विशेषतस्तु सर्वज्ञसिद्धिटीकातोऽवसेयः" इति ( यशोविजयजैनग्रन्थमालामुद्रि-

सनम् (८०) समराइच्चकहा (८१) सर्वज्ञसिद्धिप्रकरणं सटीकम् (८२) स्याद्वादकुचोद्यपरिहारः ।

एतावद्ग्रन्थनिर्माणातिरिक्तं महानिशीथसूत्रोद्धारमपि हरिभद्रसूरिर्विनिरमास्त, यदुक्तं प्रभावकचरित्रे;—

"चिरविलिखितवर्णविशीर्णभग्नप्रविवरपत्रसमूहपुस्तकस्थम् ।
कुशलमतिरिहोद्दधार जैनोपनिषदिकं स महानिशीथसूत्रम् ॥२१६॥"

यद्यपि जिनप्रभसूरयस्तीर्थकल्पे महानिशीथोद्धारविधातारं जिनभद्रगणिक्षमाश्रमणमाचक्षते, तथापि न तेनात्र विसंवादः, जिनभद्रगणिक्षमाश्रमण-हरिभद्रसूर्योः समानकालिकतया द्वयोरपि संभूय तत्करणसंभवेन मातृपुत्रादिन्यायेनोभयोरपि तदुद्धारकत्वव्यपदेशस्योपपद्यमानत्वात् ।

अयं च श्रीहरिभद्रसूरिः प्रायः समस्तानामपि सौवग्रन्थानामन्तभागं विरहशब्देनाङ्कत्; यदाहुरष्टकवृत्तौ विरहशब्दं विवृण्वन्तः श्रीजिनेश्वरसूरयः—

"विरहशब्देन हरिभद्राचार्यकृतत्वं प्रकरणस्यावेदितम्, विरहाङ्कत्वाद् हरिभद्रसूरे(रिकृते)रिति ।"

पञ्चाशकवृत्तौ श्रीमदभयदेवसूरयोऽपि—

"इह च विरहशब्देन श्रीहरिभद्राचार्यकृतता प्रकरणस्य सूचिता, विरहाङ्कत्वात् तस्य" इति ।

ललितविस्तरापञ्जिकायां मुनिचन्द्रसूरयश्च—

"इह विरह इति याकिनीमहत्तरासूनोराचार्यहरिभद्रस्य"

योगबिन्दुटीकायां चाविनिर्णीतनामधेयास्तत्कर्तारश्च—

"विरह इति च भगवतः श्रीहरिभद्रसूरे प्रकरणाङ्कद्योतकः" इति ।

प्रबन्धकोषे राजशेखरसूरयश्च—

"तत् प्रथमं याकिनीधर्मसूनुरिति हरिभद्रग्रन्थेष्वन्तेऽभूत्; १४४० पुनर्भवविरहः" इति ।

समुपलभामहेऽपि दृढं तत्कर्तृकतया निश्चितेष्विदानीमप्यवाप्येषु ग्रन्थेषु प्रान्तभागे विरहशब्दम् । कानिचिदेतादृंशि स्थलानि निदर्शनतयोपदर्शयितुमिह युक्तानि;—

---

तायां पृ० १०० ) (८२) अनेकान्तजयपताकायाः "लेशतो निदर्शितमेव, प्रपञ्चतस्त्वन्यत्र वृत्त्ययोग-संख्यादिव्यभिचार-तद्वत्प्रत्ययप्रसङ्गादिना युक्तिकलापेन निराकृतमिति नेह प्रयासः" इत्यत्रस्थस्य 'अन्यत्र' पदस्य टीकायां "अन्यत्र स्याद्वादकुचोद्यपरिहारादौ" इत्युपलब्धेः ( पृ० २५८, २७७ ) ।

१ न्यायप्रवेश-समरादित्यचरित्रादौ तददर्शनादव्याप्तिपरिहारः प्रायःकलम् ।

"अष्टकाख्यं प्रकरणं कृत्वा यत् पुण्यमर्जितम् ।
विरहात् तेन पापस्य भवन्तु सुखिनो जनाः ॥"

इत्यष्टकेषु;

"स तत्र दुःखविरहादत्यन्तसुखसंगतः ।
तिष्ठत्ययोगो योगीन्द्रवन्द्यस्त्रिजगदीश्वरः ॥ ३ ॥"

इति धर्मबिन्दौ;

"कृत्वा यदर्जितं पुण्यं मयैनां शुभभावतः ।
तेनास्तु सर्वसत्त्वानां मात्सर्यविरहः परः ॥"

इति ललितविस्तरायाम्;—

"कृत्वा प्रकरणमेतद् यदवाप्तं किञ्चिदिह मया कुशलम् ।
भवविरहबीजमनघं लभतां भव्यो जनस्तेन ॥"

इति शास्त्रवार्तासमुच्चये;

"योग्येभ्यस्तु प्रयत्नेन देयोऽयं विधिनान्वितैः ।
मात्सर्यविरहेणोच्चैः श्रेयोविघ्नप्रशान्तये ॥ २२६ ॥

इति योगदृष्टिसमुच्चये;

"एते प्रवचनतः खलु समुद्धृता मन्दमतिहितार्थं तु ।
आत्मानुस्मरणाय च भावा भवविरहसिद्धिफलाः ॥ १६ ॥"

इति षोडशकप्रकरणे;

"कृत्वा प्रकरणमेतद् यदवाप्तं कुशलमिह मया तेन ।
मात्सर्यदुःखविरहाद् गुणानुरागी भवतु लोकः ॥ १० ॥"

इत्यनेकान्तजयपताकायाम्;

"समुद्धृत्यार्जितं पुण्यं यदेनं शुभभावतः ।
भवान्ध्यविरहात् तेन जनः स्ताद् योगलोचनः ॥५२६॥"

इति योगबिन्दौ;

"वाणीसंदोहदेहे भवविरहवरं देहि मे देवि ! सारम्"

इति संसारदावास्तुतौ;

"काऊण पगरणमिणं पत्तं जं कुसलमिह मया तेणं ।
दुक्खविरहाओ भव्वा लभंतु जिणधम्मसंबोधिं ॥"

इति धर्मसंग्रहण्याम्;

"जाइणिमयहरियाए रइता एते उ धम्मपुत्तेणं ।
हरिभद्दायरिएणं भवविरहं इच्छमाणेणं ॥"

---

१ कृत्वा प्रकरणमिदं प्राप्तं यत् कुशलमिह मया तेन ।
दुःखविरहाद् भव्या लभन्तां जिनधर्मसंबोधिम् ॥

२ याकिनीमहत्तराया रचितान्येतानि तु धर्मपुत्रेण ।
हरिभद्राचार्येण भवविरहमिच्छता ॥

इत्युपदेशपदेषुः

"जम्हा एसो सुद्धो अणियाणो होइ भावियमईणं[1] ।
तम्हा करेह सम्मं जह विरहो होइ कम्माणं[2] ॥ ४४ ॥"

इति पञ्चाशकग्रन्थे च ।

विरहाङ्ककरणकारणं च स्वभागिनेयविद्वच्छिष्यहंस-परमहंसविरहसूचनमिति; यत् प्रभावकचरित्रे—

"अतिशयहृदयाभिरामशिष्यद्वयविरहोर्मिभरेण तप्तदेहः ।
निजकृतिमिह संव्यधात् समस्तां विरहपदेन युतां सतां स मुख्यः२०६"

ग्रन्थग्रन्थनानन्तरं, तत्प्रचारमन्तरेण तत्प्रयाससाफल्याभावमाकलय्य तदर्थमाहितस्वान्तचिन्तः सूरिर्द्रविद्रमपि शुभशकुनादिना निजकार्यपरिपूर्त्यलम्भविष्णुमेकं कञ्चन कार्पासिकवणिजमवेत्य विमलोपदेशेन विहितार्हतं तं निमित्तविद्याबलेन प्रचुरद्रव्यशालिनमाररचत् । स च कृतज्ञतामुररीकुर्वन् सूरिविहितग्रन्थसार्थमेकैकशोऽनेकादर्शं भूम्ना द्युम्नव्ययेनालीलिखत्, तदाननयतिपतिभ्योऽडुढौकत्, आसुसूत्रच्चेन्थं सर्वत्राप्रतिबद्धप्रचारं तम् ।

अस्याचार्यवर्यस्य हरिभद्रस्य कथितचरितमेव निरुपमगुणगणमाणिक्यरोहणतां प्रसाधयति, विशालसंख्याका विविधविषयव्यावर्णनपरा इयन्तो ग्रन्था एव च परममवधिमधिगतां विशदविशारदताश्रियं परिचाययन्ति, इति विशेषतः स्वतः किञ्चिदप्यनुच्चार्य प्राचामेव प्राज्ञानामिदंसंबन्धिनः कांश्चिदुद्गारानिहोद्धर्तुमुपयुक्तमवधारयामि; तथाहि—

"सूर्यप्रकाश्यं क नु मण्डलं दिवः खद्योतकः कास्य विभासनोद्यमी ।
क धीशगम्यं हरिभद्रसद्वचः काधीरहं तस्य विभासनोद्यत- ? ॥ ३ ॥"

( अष्टकटीकायां श्रीजिनेश्वरसूरयः )

"परहिताधाननिबिडनिबद्धबुद्धिर्भगवान् सुगृहीतनामधेयः श्रीहरिभद्रसूरिः" ( उपदेशपदवृत्तौ मुनिचन्द्रसूरयः )

"श्रीसिद्धसेन-हरिभद्रमुखाः प्रसिद्धा-
स्ते सूरयो मयि भवन्तु कृतप्रसादाः ।

---

१ यस्मादेष शुद्धोऽनिदानो भवति भावितमतीनाम् ।
तस्मात् कुरुथ सम्यग् यथा विरहो भवति कर्मणाम् ॥

२ एकोनविंशतावपि पञ्चाशकेषु प्रत्येकमन्त्यगाथायां विरहशब्दः समुपलभ्यते । अत एव तानि कतिपयानि भिन्नभिन्नग्रन्थरूपेण तत्र तत्रोल्लिखितान्यन्यैरिति संभाव्यते ।

येषां विमृश्य सततं विविधान् निबन्धान्
शास्त्रं चिकीर्षति तनुप्रतिभोऽपि मादृक् ॥ ८ ॥"
( स्याद्वादरत्नाकरे वादिश्रीदेवसूरयः )

"हारिभद्रं वचः क्वेदमतिगम्भीरपेशलम् ।
क्व चाहं जडधीरेष स्वल्पशास्त्रकृतश्रमः ॥ ९ ॥"
( धर्मसंग्रहणीटीकायां श्रीमन्मलयगिरिसूरयः )

"नित्यं श्रीहरिभद्रसूरिगुरवो जीयासुरत्यद्भुत-
ज्ञानश्रीमलङ्कृताः सुविशदाचारप्रभाभासुराः ।
येषां वाक्प्रपया प्रसन्नतरया शीलाम्बुसंपूर्णया
भव्यस्येह न कस्य कस्य विदधे चेतोमलक्षालनम् ॥१॥"
( जम्बूद्वीपसंग्रहणीटीकायां श्रीप्रभानन्दसूरयः )

"मतिर्बौद्धाः ! शुद्धा प्रभवति कथं माद्य भवतां
विचारश्चार्वाकाः ! प्रचरति कथं चारुचतुरः ? ।
कुतर्कैस्तर्कज्ञाः किमपि स कथं तर्कयति वः
सति स्याद्वादाङ्के प्रकटहरिभद्रोक्तवचने ? ॥ १ ॥

ग्रावग्रन्थिप्रमाथिप्रकटपटुरणत्कारवाग्भारतुष्ट-
प्रेङ्खद्दर्पिष्ठदुष्टप्रमदवशभुजास्फालनोत्तालवालाः ।
यद् दृष्ट्वा मुक्तवन्तः स्वयमतनुमदं वादिनो हारिभद्रं
तद् गम्भीरप्रसन्नं न हरति हृदयं भाषितं कस्य जन्तोः ? ॥२॥

यथास्थिताईन्मतवस्तुवेदिने निराकृताशेषविपक्षवादिने ।
विदग्धमध्यस्थनृमूढतारये नमोऽस्तु तस्मै हरिभद्रसूरये' ॥ ३ ॥"

१ अध्ययनाय संगमसिंहसूरिसमीपं नागपुर ( 'नागोर' इतीदानीं प्रसिद्धे ) आगतो जयसिंहसूरिशिष्यो यक्षदेवनामा कश्चिद् विपश्चिद् हरिभद्रसूरेरनेकान्तजयपताकादिन्यायग्रन्थान् विलोक्य विस्मयावहहृदयो निजं कवित्वकौशलमप्रतिबध्नन् श्लोकत्रयीमिमां चकार' इति तेनैव तत्परतो निबद्धा श्लोकद्वयी निवेदयति, सा चेयम्;—

"सितपटहारिभद्रं ग्रन्थसंदर्भदर्भं
विदितमभयदेवं निष्कलङ्काकलङ्कम् ।
सुगतमतमथालङ्कारपर्यन्तमुच्चै-
स्त्रिविधमपि च तर्कं वेत्ति यः सांख्य-भट्टौ ॥४॥

श्रीमत्संगमसिंहसूरिसुकवेस्तस्यांह्रिसेवापरः
शिष्यः श्रीजयसिंहसूरिविदुषस्त्रैलोक्यचूडामणेः ।
यः श्रीनागपुरे ( ? र ) प्रसिद्धसुपुरस्थायी श्रुतायागतः
श्लोकान् पञ्च चकार सारजडिमाऽसौ यक्षदेवो मुनिः ॥५॥"

